कर्कटरज्ज्वा । कर्कटरज्जुना ॥ **श्मश्रुजानुवसुस्वाद्वश्रुजतुत्रपुतालूनि नपुंसके** ॥ **वसु चार्थवाचि** ॥ अर्थवाचीति किम् । वसुर्मयूखाग्निधनाधिपेषु ॥ **मद्गुमधुसीधुशीधुसानुकमण्डलूनि नपुंसके च** ॥ चात्पुंसि । अयं मद्गुः । इदं मद्गु ॥ **रुत्वन्तः** ॥ मेरुः । सेतुः ॥ **दारुकसेरुजतुवस्तुमस्तूनि नपुंसके** ॥ रुत्वन्त इति पुंस्त्वस्यापवादः । इदं दारु ॥ **सक्तुर्नपुंसके च** ॥ चात्पुंसि । सक्तुः । सक्तु ॥ **प्राग्रश्मेरकारान्तः** ॥ रश्मिदिवसाभिधानमिति वक्ष्यति प्रागेतस्मादकारान्त इत्यधिक्रियते ॥ **कोपधः** ॥ कोपधोऽकारान्तः पुंसि स्यात् । स्तबकः । कल्कः ॥ **चिबुकशालूकप्रातिपदिकांशुकोल्मुकानि नपुंसके** ॥ पूर्वसूत्रापवादः ॥ **कण्टकानीकसरकमोदकचषकमस्तकपुस्तकतडाकनिष्कशुष्कवर्चस्कपिनाकभाण्डकपिण्डककटकशण्डकपिटकतालकफलकपुलाकानि नपुंसके च** ॥ चात्पुंसि । अयं कण्टकः । इदं कण्टकमित्यादि ॥ **टोपधः** टोपधोऽकारान्तः पुंसि स्यात् । घटः । पटः ॥ **किरीटमुकुटललाटवटवीटशृङ्गाटककराटलोष्टानि नपुंसके** ॥ किरीटमित्यादि ॥ **कुटकूटकपटकवाटकर्पटनटनिकटकीटकटानि नपुंसके च** ॥ चात्पुंसि । कुटः । कुटमित्यादि ॥ **णोपधः** ॥ णोपधोऽकारान्तः पंसि स्यात् । गुणः । गणः । पाषाणः ॥ **ऋणलवणपर्णतोरणोष्णानि नपुंसके** ॥ पूर्वसूत्रापवादः ॥ **कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचूर्णतृणानि नपुंसके च** ॥ चात्पुंसि ॥ **थोपधः** ॥ रथः ॥ **काष्ठपृष्ठसिक्थोक्थानि नपुंसके** ॥ इदं काष्ठमित्यादि ॥ **काष्ठा दिगर्था स्त्रियाम्** ॥ इमाः काष्ठाः ॥ **तीर्थप्रोथयूथगाथानि नपुंसके च** ॥ चात्पुंसि । अयं तीर्थः । इदं तीर्थम् ॥ **नोपधः** ॥ अदन्तः पुंसि । इनः । फेनः ॥ **जघनाजिनतुहिनकाननवनवृजिनविपिनवेतनशासनसोपानमिथुनश्मशानरत्ननिम्नचिह्नानि नपुंसके** ॥ पूर्वस्यापवादः ॥ **मानयानाभिधाननलिनपुलिनोद्यानशयनासनस्थानचन्दनालानसमानभवनवसनसम्भावनविभावनविमानानि नपुंसके च** ॥ चात्पुंसि । अयं मानः । इदं मानम् ॥ **पोपधः** ॥ अदन्तः पुंसि । यूपः । दीपः । सर्पः ॥ **पापरूपोडुपतल्पशिल्पपुष्पशष्पसमीपान्तरीपाणि नपुंसके** ॥ इदं पापमित्यादि ॥ **शूर्पकुतपकुणपद्वीपविटपानि नपुंसके च** ॥ अयं शूर्पः । इदं शूर्पमित्यादि ॥ **भोपधः** ॥ स्तम्भः । कुम्भः ॥ **तलभं नपुंसकम्** ॥ पूर्वस्यापवादः ॥ **जृम्भं नपुंसके च** ॥ जृम्भम् । जृम्भः ॥ **मोपधः** ॥ सोमः । भीमः ॥ **रुक्मसिध्मयुध्मेध्मगुल्माध्यात्मकुङ्कुमानि नपुंसके** ॥ इदं रुक्ममित्यादि ॥ **संग्रामदाडिमकुसुमाश्रमक्षेमक्षौमहोमोद्दामानि नपुंसके च** ॥ चात्पुंसि । अयं संग्रामः । इदं संग्रामम् ॥ **योपधः** ॥ समयः । हयः ॥ **किसलयहृद-**

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

**ऐन्द्रिदोत्तरीयाणि नपुंसके** ॥ स्पष्टम् ॥ **गोमयकषायमलयान्वयाभ्ययानि नपुंसके च** ॥ गोमयः । गोमयम् ॥ **रोपधः** ॥ क्षुरः । अङ्कुरः ॥ **द्वाराग्रस्फारतक्रवक्रवप्रक्षिप्रक्षुद्रनारतीरदूरकृच्छ्ररन्ध्राश्रश्वभ्रभीरगभीरक्रूरविचित्रकेयूरकेदारोदराजस्रशरीरकन्दरमन्दारपञ्जराजरजठराजिरवैरचामरपुष्करगह्वरकुहरकुटीरकुलीरचत्वरकाश्मीरनीराम्बरशिशिरतन्त्रयन्त्रक्षत्रक्षेत्रमित्रकलत्रचित्रमूत्रसूत्रवक्त्रनेत्रगोत्राङ्गुलित्रभलत्रशस्त्रशास्त्रवस्त्रपत्रपात्रच्छत्राणि नपुंसके** ॥ इदं द्वारमित्यादि ॥ **शुक्रमदेवतायाम्**॥ इदं शुक्रं रेतः॥**चक्रवज्रान्धकारसारावारपारक्षीरतोमरशृङ्गारभृङ्गारमन्दारोशीरतिमिरशिशिराणि नपुंसके च** ॥ चात्पुंसि । चक्रः । चक्रमित्यादि ॥ **षोपधः** ॥ वृषः । वृक्षः ॥ **शिरीषर्जीषाम्बरीषपीयूषपुरीषकिल्बिषकल्माषाणि नपुंसके** ॥ **यूषकरीषमिषविषवर्षाणि नपुंसके च** ॥ चात्पुंसि । अयं यूषः । इदं यूषमित्यादि ॥ **सोपधः** ॥ वत्सः वायसः । महानसः ॥ **पनसबिसबुससाहसानि नपुंसके** ॥ **चमसांसरसनिर्यासोपवासकार्पासवासमासकासकांसमांसानि नपुंसके च** ॥ इदं चमसम् । अयं चमस इत्यादि ॥ **कंसं चाप्राणिनि** ॥ कंसोऽस्त्री पानभाजनम् । प्राणिनि तु कंसो नाम कश्चिद्राजा ॥ **रश्मिदिवसाभिधानानि** ॥ एतानि पुंसि स्युः । रश्मिर्मयूखः । दिवसो घस्रः ॥ **दीधितिः स्त्रियाम्** ॥ पूर्वस्यापवादः ॥ **दिनाहनी नपुंसके** ॥ अयमप्यपवादः ॥ **मानाभिधानि** ॥ एतानि पुंसि स्युः । कुडवः । प्रस्थः ॥ **द्रोणाढकौ नपुंसके च** ॥ इदं द्रोणम् । अयं द्रोणः ॥ **खारीमानिके स्त्रियाम्** ॥ इयं खारी । इयं मानिका ॥ **दाराक्षतलाजासूनां बहुत्वं च** ॥ इमे दाराः ॥ **नाड्यपजनोपपदानि व्रणाङ्गपदानि** ॥ यथासंख्यं नाड्याद्युपपदानि व्रणादीनि पुंसि स्युः ॥ अयं नाडीव्रणः । अपाङ्गः । जनपदः । व्रणादीनामुभयलिङ्गत्वेऽपि क्लीबत्वनिवृत्त्यर्थं सूत्रम् ॥ **मरुद्गुरुत्तरद्दत्विजः** ॥ अयं मरुत् ॥ **ऋषिराशिदृतिग्रन्थिक्रिमिध्वनिबलिकौलिमौलिरविकविकपिमुनयः** ॥ एते पुंसि स्युः । अयमृषिः ॥ **ध्वजगजमुञ्जपुञ्जाः** ॥ एते पुंसि ॥ **हस्तकुन्तान्तव्रातवातदूतधूर्तसूतचूतमुहूर्ताः** ॥ एते पुंसि ॥ अमरस्तु मुहूर्तोऽस्त्रियामित्याह ॥ **षण्डमण्डकरण्डभरण्डवरण्डतुण्डगण्डमुण्डपाषण्डशिखण्डाः** ॥ अयं षण्णः ॥ **वंशांशपुरोडाशाः** ॥ अयं वंशः । पुरो दाश्यते पुरोडाशः । कर्मणि घञ् । भवव्याख्यानयोः प्रकरणे पौरोडाशपुरोडाशात्ष्ठन्निति विकारप्रकरणे मीहः पुरोडाश इति च निपातनात्प्रकृतसूत्र एव निपातनाद्वा दस्य डत्वम् । पुरोडाशभुजामिष्टमिति माघः ॥ **ह्रदकन्दकुन्दबुद्बुदशब्दाः** ॥ अयं ह्रदः ॥ **अर्धपथिम-**

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ध्यृभुक्षिस्तम्बनितम्बपूगाः ॥ अयमर्घः ॥ **पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गतुरङ्गगन्धस्कन्धमृदङ्गसङ्गसमुद्रपुङ्खाः** ॥ अयं पल्लव इत्यादि ॥ **सारथ्यतिथिकुक्षिवस्तिपाण्यञ्जलयः** ॥ एते पुंसि । अयं सारथिः ॥

## ॥ इति पुल्लिङ्गाधिकारः ॥

**नपुंसकम्** ॥ अधिकारोऽयम् ॥ **भावे ल्युडन्तः** ॥ हसनम् । भावे किम् । पचनोऽग्निः । इध्मव्रश्चनः कुठारः ॥ **निष्ठा च** ॥ भावे या निष्ठा तदन्तं क्लीवं स्यात् । हसितम् । गीतम् ॥ **त्वष्यञौ तद्धितौ** ॥ शुक्लत्वम् । शौक्ल्यम् । ष्यञः पित्त्वसामर्थ्यात्पक्षे स्त्रीत्वम् । चातुर्यम् । चातुरी सामग्र्यम् । सामग्री । औचित्यम् । औचिती । **कर्मणि च ब्राह्मणादिगुणवचनेभ्यः** ॥ ब्राह्मणस्य कर्म ब्राह्मण्यम् ॥ **यद्यढग्यगञ्ण्वुञ्छाश्च भावकर्मणि** ॥ एतदन्तानि क्लीबानि ॥ स्तेनाद्यन्नलोपश्च । स्तेयम् । सख्युर्यः । सख्यम् । कपिज्ञात्योर्ढक् । कापेयम् । पत्यन्तपुरोहितादिभ्यो यक् । आधिपत्यम् । प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् । औष्ट्रम् । हायनान्तयुवादिभ्योऽण् । द्वैहायनम् । द्वन्द्वमनोज्ञादिभ्यो वुञ् । पितापुत्रकम् । होत्राभ्यश्छः । अच्छावाकीयम् ॥ **अव्ययीभावः** ॥ अधिस्त्रि ॥ **द्वन्द्वैकत्वम्** ॥ पाणिपादम् ॥ **अभाषायां हेमन्तशिशिरावहोरात्रे च** ॥ स्पष्टम् ॥ **अनञ्कर्मधारयस्तत्पुरुषः** ॥ अधिकारोऽयम् ॥ **अनल्पे छाया** ॥ शरच्छायम् ॥ **राजामनुष्यपूर्वा सभा** ॥ इनसभमित्यादि ॥ **सुरासेनाच्छायाशालानिशा स्त्रियां च** ॥ **शिष्टः परवत्** ॥ अन्यस्तत्पुरुषः परवल्लिङ्गः स्यात् । **रात्राह्नाहाः पुंसि** ॥ **अपथपुण्याहे नपुंसके** ॥ **संख्यापूर्वा रात्रिः** ॥ त्रिरात्रम् । संख्यापूर्वेति किम् । सर्वरात्रः ॥ ॥ **द्विगुः स्त्रियां च** ॥ व्यवस्थया । पञ्चमूली । त्रिभुवनम् ॥ **इसुसन्तः** ॥ हविः । धनुः ॥ **अर्चिः स्त्रियां च** ॥ इसन्तत्वेऽपि अर्चिः स्त्रियां नपुंसके च स्यात् । इयमिदं वा अर्चिः ॥ **छदिः स्त्रियामेव** ॥ इयं छदिः । छद्यतेऽनेनेति छादेश्चुरादिण्यन्तादर्चिशुचीत्यादिना इस् । इसमन्नित्यादिना ह्रस्वः । पटलं छदिरित्यमरः । तत्र पटसाहचर्याच्छदिषः क्लीवतां वदन्तोऽमरव्याख्यातार उपेक्ष्याः ॥ **मुखनयनलोहवनमांसरुधिरकार्मुकविवरजलहलधनान्नाभिधानानि** ॥ एतेषामभिधायकानि क्लीवे स्युः । मुखमाननम् । नयनं लोचनम् । लोहं कालम् । वनं गहनम् । मांसमामिषम् । रुधिरं रक्तम् । कार्मुकं शरासनम् । विवरं बिलम् । जलं वारि । हलं लाङ्गलम् । धनं द्रविणम् । अन्नमशनम् ॥ अस्यापवादानाह त्रिसूत्र्या ॥ **सीरार्थौदनाः पुंसि** ॥ **वक्त्रनेत्रारण्यगाण्डीवानि पुंसि च** ॥ वक्त्रो वक्त्रम् । नेत्रो नेत्रम् । अरण्योऽरण्यम् । गाण्डीवो गाण्डीवम् ॥ **अटवी स्त्रियाम्** ॥ **लोपधः** ॥ कुलम् । कूलम् । स्थलम् ॥ **तूलोपलतालकुसूलतरलकम्बलदेवलवृषलाः पुंसि** ॥ अयं तूलः ॥ **शीलमूलमङ्गलसाल**-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

**कमलतलमुसलकुण्डलपललमृणालवालनिगलपलालबिडालखिलशू-लाः पुंसि च** ॥ चात् क्लीबे । शीलं शील इत्यादि ॥ **शतादिः संख्या** ॥ शतम् । सहस्रम् । शतादिरिति किम् । एको द्वौ बहवः । संख्येति किम् । शतशृङ्गो नाम पर्वतः ॥ **शतायुतप्रयुताः पुंसि च** ॥ अयं शतः । इदं शतमित्यादि ॥ **लक्षा कोटिः स्त्रियाम्** ॥ इयं लक्षा । इयं कोटिः । वा लक्षा नियुतं च तदित्यमरात् । क्लीबेऽपि लक्षम् ॥ **शङ्कुः पुंसि** ॥ **सहस्रः क्वचित्** ॥ अयं सहस्रः । इदं सहस्रम् ॥ **मन्द्व्यच्कोऽकर्तरि** ॥ मन्प्रत्ययान्तो द्व्यच्कः क्लीबः स्यान्न तु कर्तरि । वर्म । चर्म ॥ द्व्यच्कः किम् । अणिमा । महिमा । अकर्तरि किम् । ददाति इति दामा ॥ **ब्रह्मन् पुंसि च** ॥ अयं ब्रह्मा । इदं ब्रह्म ॥ **नामरोमणी नपुंसके** ॥ मन्द्व्यच्क इत्यस्यायं प्रपञ्चः ॥ **असन्तो द्व्यच्कः** ॥ यशः । मनः । तपः । द्व्यच्कः । किम् । चन्द्रमाः । **अप्सराः स्त्रियाम्** ॥ एता अप्सरसः । प्रायेणायं बहुवचनान्तः ॥ **त्रान्तः** ॥ पत्रम् । छत्रम् ॥ **यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव** ॥ **भृत्रामित्रछात्रपुत्रमन्त्रवृत्रमेढ्रोष्ट्राः पुंसि** ॥ अयं भृत्रः । न मित्रममित्रः । तस्य मित्राण्यमित्रास्ते इति माघः । स्यातामभित्रौ मित्रे चेति च । यत्तु द्विषोऽमित्र इति सूत्रे हरदत्तेनोक्तम् । अमेर्द्विषदित्यौणादिक इत्रच् । अमेरमित्रम् । मित्रस्य व्यथयेदित्यादौ मध्योदात्तस्तु चिन्त्यः । नञ्समासेऽप्येवम् । परवल्लिङ्गतापि स्यादिति तु तत्र दोषान्तरमिति तत्प्रकृतसूत्रापर्यालोचनमूलकम् । स्वरदोषोद्भावनमपि नञो जरमरमित्रमृता इति षाष्ठसूत्रासरणमूलकमिति दिक् ॥ **पत्रपात्रपवित्रसूत्रच्छत्राः पुंसि च** ॥ **बलकुसुमशुल्बपत्तनरणाभिधानानि** ॥ बलं वीर्यम् ॥ **पद्मकमलोत्पलानि पुंसि च** ॥ पद्मादयः शब्दाः कुसुमाभिधायित्वेऽपि द्विलिङ्गाः स्युः । अमरोऽप्याह ॥ वा पुंसि पद्मं नलिनमिति । एवं चार्धर्चादिसूत्रे तु जलजे पद्मं नपुंसकमेवेति वृत्तिग्रन्थो मतान्तरेण नेयः ॥ **आहवसंग्रामौ पुंसि** ॥ **आजि स्त्रियामेव** ॥ **फलजातिः** ॥ फलजातिवाचीशब्दो नपुंसकं स्यात् । आमलकम् । आम्रम् ॥ **वृक्षजातिः** ॥ **स्त्रियामेव** ॥ क्वचिदेवेदम् । हरीतकी ॥ **वियज्जगत्सकृत्शकन्पृषत्शकृद्यकृदुदश्वितः** ॥ एते क्लीबाः स्युः ॥ **नवनीतावतानानृतामृतनिमित्तवित्तचित्तपित्तव्रतरजतवृत्तपलितानि** ॥ **श्राद्धकुलिशदैवपीठकुण्डाङ्काङ्गदधिसक्थ्यक्ष्यास्यास्पदाकाशकण्वबीजानि** ॥ एतानि क्लीबे स्युः ॥ **दैवं पुंसि च** ॥ दैवम् । दैवः ॥ **धान्याज्यसस्यरूप्यपण्यवर्ण्यधृष्यहव्यकव्यकाव्यसत्यापत्यमूल्यशिक्यकुड्यकद्यहर्म्यतूर्यसैन्यानि** ॥ इदं धान्यमित्यादि ॥ **अद्वन्द्वबर्हदुःखबडिशपिच्छबिम्बकुटुम्बकवचवरशरवृन्दारकाणि** ॥ **अक्षमिन्द्रिये** ॥ इन्द्रिये किम् । रथाङ्गादौ मा भूत् ॥

## इति नपुंसकाधिकारः ॥

CC-0- JangamwadiMath Collection. Digitized by eGangotri

**स्त्रीपुंसयोः** ॥ अधिकारोऽयम् ॥ **गोमणियष्टिमुष्टिपाटलिवस्तिशाल्मलित्रुटिमसिमरीचयः** ॥ इयमयं वा गौः ॥ **मृत्युसीधुकर्कन्धुकिष्कुकण्डुरेणवः** ॥ इयमयं वा मृत्युः ॥ **गुणवचनमुकारान्तं नपुंसकं च** ॥ त्रिलिङ्गमित्यर्थः ॥ पटु । पटुः । पट्वी ॥ **अपत्यार्थस्तद्धिते** ॥ औपगवः । औपगवी ॥

## ॥ इति स्त्रीपुंसाधिकारः ॥

**पुन्नपुंसकयोः** ॥ अधिकारोयम् ॥ **घृतभूतमुस्तक्ष्वेलितैरावतपुस्तकवुस्तलोहिताः** ॥ अयं घृतः । इदं घृतम् ॥ **शृङ्गार्घनिदाघोद्यमशल्यदृढाः** ॥ अयं शृङ्गः । इदं शृङ्गम् ॥ **व्रजकुञ्जकुथकूर्चप्रस्थदर्पार्भार्धर्चदर्भपुच्छाः** ॥अयं व्रजः। इदं व्रजम् ॥ **कबन्धौषधायुधान्ताः** ॥ स्पष्टम् ॥ **दण्डमण्डखण्डशवसैन्धवपार्श्वाकाशकुशकाशाङ्कुशकुलिशाः** ॥ एते पुन्नपुंसकयोः स्युः । कुशो रामसुते दर्भे योक्त्रे द्वीपे कुशं जले इति विश्वः । शलाकावाची तु स्त्रियाम् । तथा च जनपदादिसूत्रेणायोविकारे ङीषि कुशी । दारुणि तु टाप् कुशा । वानसपत्याः स्थ ता मा यातेति श्रुतिः । अतः कृकमीति सूत्रे कुशाकर्णीष्विति प्रयोगश्च । व्याससूत्रे च । हानौ तूपायनशब्दे शेषत्वात्कुशाच्छन्द इति । तत्र शारीरकभाष्येऽप्येवम् । एवं च श्रुतिसूत्रभाष्याणामेकवाक्यत्वे स्थिते आच्छन्द इत्याङ्प्रश्लेषादिपरो भामतीग्रन्थः प्रौढिवादमात्रपर इति विभावनीयं बहुश्रुतैः ॥ **गृहमेहदेहपट्टपटहाष्टापदाम्बुदककुदाश्च** ॥

## ॥ इति पुन्नपुंसकाधिकारः ॥

**अवशिष्टलिङ्गम्** ॥ **अव्ययम्** । **कतियुष्मदस्मदः** ॥ **ष्णान्तासंख्या** ॥ शिष्टा परवत् ॥ एकः पुरुषः । एका स्त्री । एकं कुलम् ॥ **गुणवचनं च** ॥ शुक्लः पटः । शुक्ला पटी । शुक्लं वस्त्रम् ॥ **कृत्याश्च** ॥ **करणाधिकरणयोर्ल्युट् च** ॥ **सर्वादीनि सर्वनामानि** ॥ स्पष्टार्थेयं त्रिसूत्री ॥

इति श्रीभट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यां पाणिनीयलिङ्गानुशासनसूत्रवृत्तिः समाप्ता ॥ ॥ श्रीरस्तु ॥

## ॥ समाप्तेयं सिद्धान्तकौमुदी ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

श्रीः ।

# अथ शिक्षा ।

अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतं यथा । शास्त्रानुपूर्वं तद्विद्याद्यथोक्तं लोकवेदयोः ॥ १ ॥ प्रसिद्धमपि शब्दार्थमविज्ञातमबुद्धिभिः । पुनर्व्यक्तीकरिष्यामि वाच उच्चारणे विधिम् ॥२॥ त्रिषष्टि श्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः । प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयंभुवा ॥३॥ स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः । यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः ॥४॥ अनुस्वारो विसर्गश्च ᳵकᳶपौ चापि पराश्रितौ । दुःस्पृष्टश्चेति विज्ञेयो लृकारः प्लुत एव च ॥५॥१॥ आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया । मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥६॥ मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् । प्रातःसवनयोगं तं छन्दोगायत्रमाश्रितम् ॥७॥ कण्ठे माध्यन्दिनयुगं मध्यमं त्रैष्टुभानुगम् । तारं तार्तीयसवनं शीर्षण्यं जागतानुगम् ॥८॥ सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः । वर्णाञ्जनयते तेषां विभागः पञ्चधा स्मृतः ॥९॥ स्वरतः कालतः स्थानात्प्रयत्नानुप्रदानतः । इति वर्णविदः प्राहुर्निपुणं तन्निबोधत ॥ १० ॥ २ ॥ उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः । ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि ॥११॥ उदात्ते निषादगान्धारावनुदात्त ऋषभधैवतौ । स्वरितप्रभवा ह्येते षड्जमध्यमपञ्चमाः ॥१२॥ अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥१३॥ ओभावश्च विवृत्तिश्च शषसा रेफ एव च । जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ॥ १४ ॥ यद्योभावप्रसंधानमुकारादिपरं पदम् । स्वरान्तं तादृशं विद्याद्यदन्यद्व्यक्तमूष्मणः ॥ १५ ॥ ३ ॥ हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम् । औरस्यं तं विजानीयात्कण्ठ्यमाहुरसंयुतम् ॥ १६ ॥ कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू । स्युर्मूर्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः ॥१७॥ जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो वः स्मृतो बुधैः । एऐ तु कण्ठतालव्या ओऔ कण्ठोष्ठजौ स्मृतौ ॥ १८ ॥ अर्धमात्रा तु कण्ठ्या स्यादेकारैकारयोर्भवेत् । ओकारौकारयोर्मात्रा तयोर्विवृतसंवृतम् ॥१९॥ संवृतं मात्रिकं ज्ञेयं विवृतं तु द्विमात्रिकम् । घोषा वा संवृताः सर्वे अघोषा विवृताः स्मृताः ॥ २०॥४॥ स्वराणामूष्मणां चैव विवृत्तं करणं स्मृतम् । तेभ्योपि विवृतावेङौ ताभ्यामैचौ तथैव च ॥२१॥ अनुस्वरयमानां च नासिकास्थानमुच्यते । अयोगवाहा विज्ञेया आश्रयस्थानभागिनः ॥२२॥ अलाबुवीणानिर्घोषो दन्त्यमूल्यस्वराननु । अनुस्वारस्तु कर्तव्यो नित्यं ह्रोः शषसेषु च ॥२३॥ अनुस्वारे विवृत्यां तु विरामे चाक्षरद्वये । द्विरोष्ठ्यौ तु विगृह्णीयाद्यत्रौकारवकारयोः ॥२४॥ व्याघ्री यथा हरेत्पुत्रान्दंष्ट्राभ्यां न च पीडयेत् । भीता पतनभेदाभ्यां तद्वद्वर्णान्प्रयोजयेत् ॥ २५ ॥५ ॥ यथा सौराष्ट्रिका नारी तक्रँ इत्यभिभाषते । एवं रङ्गाः प्रयोक्तव्याः खे अराँ इव खेदया ॥ २६ ॥ रङ्गवर्णं प्रयुञ्जीरन्नो ग्रसेत्पूर्वमक्षरम् । दीर्घस्वरं प्रयुञ्जीयात्पश्चान्नासिक्यमाचरेत् ॥ २७ ॥ हृदये चैकमात्रस्त्वर्धमात्रस्तु मूर्धनि । नासिकायां तथार्धं च रङ्गस्यैवं द्विमात्रता ॥ २८ ॥ हृदयादुत्करे तिष्ठन्कांस्येन समनुस्वरन् । मार्दवं च द्विमात्रं च जघन्वाँ इति निदर्शनम् ॥ २९ ॥ मध्ये तु कम्पयेत्कम्पमुभौ पार्श्वौ समौ भवेत् । सरङ्गं कम्पयेत्कम्पं रथीवेति निदर्शनम् ॥ ३० ॥ एवं वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडिताः । सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते ॥ ३१ ॥ ६ ॥ गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः । अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ॥ ३२ ॥ माधुर्य-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः । धैर्यं लयसमर्थं च षडेते पाठका गुणाः ॥ ३३ ॥ शङ्कितं भीतमुद्घृष्टमव्यक्तमनुनासिकम् । काकस्वरं शिरसि गतं तथा स्थानविवर्जितम् ॥३४॥ उपांशु दष्टं त्वरितं निरस्तं विलम्बितं गद्गदितं प्रगीतम् । निष्पीडितं ग्रस्तपदाक्षरं च वदेन्न दीनं न तु सानुनास्यम् ॥३५॥ प्रातः पठेन्नित्यमुरःस्थितेन स्वरेण शार्दूलरुतोपमेन । मध्यंदिने कण्ठगतेन चैव चक्राह्वसंकूजितसन्निभेन ॥३६॥ तारं तु विद्यात्सवनं तृतीयं शिरोगतं तच्च सदा प्रयोज्यम् । मयूरहंसान्यभृतस्वराणां तुल्येन नादेन शिरःस्थितेन ॥३७॥७॥ अचोऽस्पृष्टा यणस्त्वीषन्नेमिस्पृष्टाः शलः स्मृताः । शेषाः स्पृष्टा हलः प्रोक्ता निबोधानुप्रदानतः ॥३८॥ यमोऽनुनासिका नह्रौ नादिनो हझषः स्मृताः । ईषन्नादा यणो जश्च श्वासिनस्तु खफादयः ॥३९॥ ईषच्छ्वासांश्चरो विद्याद्गोर्धामैतत्प्रचक्षते । दाक्षीपुत्रः पाणिनिना येनेदं व्यापितं भुवि ॥४०॥ छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते । ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥४१॥ शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् । तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥४२॥८॥ उदात्तमाख्याति वृषोऽङ्गुलीनां प्रदेशिनीमूलनिविष्टमूर्धा । उपान्तमध्ये स्वरितं धृतं च कनिष्ठिकायामनुदात्तमेव ॥ ४३ ॥ उदात्तं प्रदेशिनीं विद्यात्प्रचयं मध्यतोऽङ्गुलिम् । निहतं तु कनिष्ठिक्यां स्वरितोपकनिष्ठिकाम् ॥४४॥ अन्तोदात्तमाद्युदात्तमुदात्तमनुदात्तं नीचस्वरितम् । मध्योदात्तं स्वरितं द्व्युदात्तं त्र्युदात्तमिति नवपदशय्या ॥ ४५ ॥ अग्निः सोमः प्रवो वीर्यं हविषां स्वर्बृहस्पतिरिन्द्राबृहस्पती । अग्निरित्यन्तोदात्तं सोम इत्याद्युदात्तं प्रेत्युदात्तं व इत्यनुदात्तं वीर्यं नीचस्वरितम् ॥४६॥ हविषां मध्योदात्तं स्वरिति स्वरितम् । बृहस्पतिरिति द्व्युदात्तमिन्द्राबृहस्पती इति त्र्युदात्तम् ॥ ४७ ॥ अनुदात्तो हृदि ज्ञेयो मूर्ध्न्युदात्त उदाहृतः । स्वरितः कर्णमूलीयः सर्वास्ये प्रचयः स्मृतः ॥ ४८ ॥ ९ ॥ चाषस्तु वदते मात्रां द्विमात्रं त्वेव वायसः । शिखी रौति त्रिमात्रं तु नकुलस्त्वर्धमात्रकम् ॥ ४९ ॥ कुतीर्थादागतं दग्धमपवर्णं च भक्षितम् । न तस्य पाठे मोक्षोऽस्ति पापाहेरिव किल्बिषात् ॥ ५० ॥ सुतीर्थादागतं व्यक्तं स्वाम्नायं सुव्यवस्थितम् । सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते ॥ ५१ ॥ मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ ५२ ॥ अवक्षरं हनायुष्यं विस्वरं व्याधिपीडितम् । अक्षता शस्त्ररूपेण वज्रं पतति मस्तके ॥५३॥ हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम् । ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति ॥५४॥ हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम् । ऋग्यजुःसामभिः पूतो ब्रह्मलोके महीयते ॥५५॥१०॥ शंकरः शांकरीं प्रादाद्दाक्षीपुत्राय धीमते । वाङ्मयेभ्यः समाहृत्य देवीं वाचमिति स्थितिः ॥५६॥ येनाक्षरसमाम्नायमधिगम्य महेश्वरात् । कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥ ५७ ॥ येन धौता गिरः पुंसां विमलैः शब्दवारिभिः । तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥५८॥ अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै पाणिनये नमः ॥५९॥ त्रिनयनमभिमुखनिःसृतामिमां य इह पठेत्प्रयतश्च सदा द्विजः । स भवति धनधान्यपशुपुत्रकीर्तिमानतुलं च सुखं समश्नुते दिवीति दिवीति ॥६०॥११॥ अथ शिक्षामात्मोदात्तश्च हकारं स्वराणां यथागीत्यचोऽस्पृष्टोदात्तं चाषस्तु शंकर एकादश ॥

इति शिक्षा समाप्ता ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

॥ श्रीः ॥

# अष्टाध्यायीसूत्रपाठः ।

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥
येन धौता गिरः पुंसां विमलैः शब्दवारिभिः ।
तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥

**अइउण् । ऋऌक् । एओङ् । ऐऔच् । हयवरट् । लण् । ञमङणनम् । झभञ् । घढधष् । जबगडदश् । खफछठथचटतव् । कपय् । शषसर् । हल् ॥ इति प्रत्याहारसूत्राणि ॥**

## प्रथमोऽध्यायः ।

### प्रथमः पादः ।

१ वृद्धिरादैच् ॥ २ अदेङ्गुणः ॥ ३ इको गुणवृद्धी ॥ ४ न धातुलोप आर्धधातुके ॥ ५ क्ङिति च ॥ ६ दीधीवेवीटाम् ॥ ७ हलोऽनन्तराः संयोगः ॥ ८ मुखनासिकावचनोऽनुनासिकः ॥ ९ तुल्यास्यप्रयत्नं सवर्णम् ॥ १० नाज्झलौ ॥ ११ ईदूदेद्द्विवचनं प्रगृह्यम् ॥ १२ अदसो मात् ॥ १३ शे ॥ १४ निपात एकाजनाङ् ॥ १५ ओत् ॥ १६ संबुद्धौ शाकल्यस्येतावनार्षे ॥ १७ उञः ॥ १८ ऊँ ॥ १९ ईदूतौ च सप्तम्यर्थे ॥ २० दाधा घ्वदाप् ॥ १ ॥ २२ आद्यन्तवदेकस्मिन् ॥ २४ तरप्तमपौ घः ॥ २३ बहुगणवतुडति संख्या ॥ २४ ष्णान्ता षट् ॥ २५ डति च ॥ २६ क्तक्तवतू निष्ठा ॥ २७ सर्वादीनि सर्वनामानि ॥ २८ विभाषा दिक्समासे बहुव्रीहौ ॥ २९ न बहुव्रीहौ ॥ ३० तृतीयासमासे ॥ ३१ द्वन्द्वे च ॥ ३२ विभाषा जसि ॥ ३३ प्रथमचरमतयाल्पार्धकतिपयनेमाश्च ॥ ३४ पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ॥ ३५ स्वमज्ञातिधनाख्यायाम् ॥ ३६ अन्तरं बहिर्योगोपसंव्यानयोः ॥ ३७ स्वरादिनिपातमव्ययम् ॥ ३८ तद्धितश्चासर्वविभक्तिः ॥ ३९ कृन्मेजन्तः ॥ ४० क्त्वातोसुन्कसुनः ॥ २ ॥ ४१ अव्ययीभावश्च ॥ ४२ शि सर्वनामस्थानम् ॥ ४३ सुडनपुंसकस्य ॥ ४४ न वेति विभाषा ॥ ४५ ॥ इग्यणः संप्रसारणम् ॥ ४६ आद्यन्तौ टकितौ ॥ ४७ मिदचोऽन्त्यात्परः ॥ ४८ एच इग्घ्रस्वादेशे ॥ ४९ षष्ठी स्थानेयोगा ॥ ५० स्थानेऽन्तरतमः ॥ ५१ उरण्रपरः । ५२ अलोऽन्त्यस्य ॥ ५३ ङिच्च ॥ ५४ आदेः परस्य ॥ ५५ अनेकाल्शित्सर्वस्य ॥ ५६ स्थानिवदादेशोऽनल्विधौ ॥ ५७ अचः परस्मिन्पूर्वविधौ ॥ ५८ न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ॥ ५९ द्विर्वचनेऽचि ॥ ६० अदर्शनं लोपः ॥ ३ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

६१ प्रत्ययस्य लुक्श्लुलुपः ॥ ६२ प्रत्ययलोपे प्रत्ययलक्षणम् ॥ ६३ न लुमताङ्गस्य ॥ ६४ अचोऽन्त्यादिटि ॥ ६५ ॥ अलोन्त्यात्पूर्व उपधा ॥ ६६ तस्मिन्निति निर्दिष्टे पूर्वस्य ॥ ६७ तस्मादित्युत्तरस्य ॥ ६८ स्वंरूपं शब्दस्याशब्दसंज्ञा ॥ ६९ अणुदित्सवर्णस्य चाप्रत्ययः ॥ ७० तपरस्तत्कालस्य ॥ ७१ आदिरन्त्येन सहेता ॥ ७२ येन विधिस्तदन्तस्य ॥ ७३ वृद्धिर्यस्याचामादिस्तद्वृद्धम् ॥ ७४ त्यदादीनि च ॥ ७५ एङ् प्राचां देशे ॥ "वृद्धिराद्यन्तवदव्ययीभावःप्रत्ययस्यलुक्पञ्चदश" ॥

---

## द्वितीयः पादः ।

१ गाङ्कुटादिभ्योऽञ्णिन्ङित् ॥ २ विज इट् ॥ ३ विभाषोर्णोः ॥ ४ सार्वधातुकमपित् ॥ ५ असंयोगाल्लिट्कित् ॥ ६ ॥ इन्धिभवतिभ्यां च ॥ ७ मृडमृदगुधकुषक्लिशवदवसः क्त्वा ॥ ८ रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ॥ ९ इको झल् ॥ १० हलन्ताच्च ॥ ११ लिङ्सिचावात्मनेपदेषु ॥ १२ उश्च ॥ १३ वा गमः ॥ १३ हनः सिच् ॥ १५ यमो गन्धने ॥ १६ विभाषोपयमने ॥ १७ स्थाघ्वोरिच्च ॥ १८ न क्त्वा सेट् ॥ १९ निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः ॥ २० मृषस्तितिक्षायाम् ॥ १ ॥ २१ उदुपधाद्भावादिकर्मणोरन्यतरस्याम् ॥ २२ पूङः क्त्वा च ॥ २३ नोपधात्थफान्ताद्वा ॥ २४ वञ्चिलुञ्च्यृतश्च ॥ २५ तृषिमृषिकृशेः काश्यपस्य ॥ २६ रलो व्युपधाद्धलादेः संश्च ॥ २७ ऊकालोऽज्झ्रस्वदीर्घप्लुतः ॥ २८ अचश्च ॥ २९ उच्चैरुदात्तः ॥ ३० नीचैरनुदात्तः ॥ ३१ समाहारः स्वरितः ॥ ३२ तस्यादित उदात्तमर्धह्रस्वम् ॥ ३३ एकश्रुति दूरात्संबुद्धौ ॥ ३४ यज्ञकर्मण्यजपन्यूङ्खसामसु ॥ ३५ उच्चैस्तरां वा वषट्कारः ॥ ३६ विभाषा छन्दसि ॥ ३७ न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ॥ ३८ देवब्रह्मणोरनुदात्तः ॥ ३९ स्वरितात्संहितायामनुदात्तानाम् ॥ ४० उदात्तस्वरितपरस्य सन्नतरः ॥ २ ॥ ४१ अपृक्त एकाल्प्रत्ययः ॥ ४२ तत्पुरुषः समानाधिकरणः कर्मधारयः ॥ ४३ प्रथमानिर्दिष्टं समास उपसर्जनम् ॥ ४४ एकविभक्ति चापूर्वनिपाते ॥ ४५ अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ॥ ४६ कृत्तद्धितसमासाश्च ॥ ४७ ह्रस्वो नपुंसके प्रातिपदिकस्य ॥ ४८ गोस्त्रियोरुपसर्जनस्य ॥ ४९ ॥ लुक्तद्धितलुकि ॥ ५० इद्गोण्याः ॥ ५१ लुपि युक्तवद्व्यक्तिवचने ॥ ५२ विशेषणानां चाजातेः ॥ ५३ तदशिष्यं संज्ञाप्रमाणत्वात् ॥ ५४ लुब्योगाप्रख्यानात् ॥ ५५ योगप्रमाणे च तदभावेऽदर्शनं स्यात् ॥ ५६ प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् ॥ ५७ कालोपसर्जने च तुल्यम् ॥ ५८ जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् ॥ ५९ अस्मदो द्वयोश्च ॥ ६० फल्गुनीप्रोष्ठपदानां च नक्षत्रे ॥ ३ ॥ ६१ छन्दसि पुनर्वस्वोरेकवचनम् ॥ ६२ विशाखयोश्च ॥ ६३ तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ॥ ६४ सरूपाणामेकशेष एकविभक्तौ ॥ ६५ वृद्धो यूना तल्लक्षणश्चेदेव

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विशेषः ॥ ६६ स्त्री पुंवच्च ॥ ६७ पुमान्स्त्रिया ॥ ६८ भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ॥ ६९ नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ॥ ७० पिता मात्रा ॥ ७१ श्वशुरः श्वश्र्वा ॥ ७२ त्यादादीनि सर्वैर्नित्यम् ॥ ७३ ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री ॥ "गाङ्कुटाद्युदुपधाद्-पृक्तश्छन्दसिपुनर्वस्वोस्त्रयोदश" ॥

---

## तृतीयः पादः।

१ भूवादयो धातवः ॥ २ उपदेशेऽजनुनासिक इत् ॥ ३ हलन्त्यम् ॥ ४ न विभक्तौ तुस्माः ॥ ५ आदिर्ञिटुडवः ॥ ६ षः प्रत्ययस्य ॥ ७ चुटू ॥ ८ लशक्वतद्धिते ॥ ९ तस्य लोपः ॥ १० यथासंख्यमनुदेशः समानाम् ॥ ११ स्वरितेनाधिकारः ॥ १२ अनुदात्त-ङित आत्मनेपदम् ॥ १३ भावकर्मणोः ॥ १४ कर्तरि कर्मव्यतिहारे ॥ १५ न गति-हिंसार्थेभ्यः ॥ १६ इतरेतरान्योन्योपपदाच्च ॥ १७ नेर्विशः ॥ १८ परिव्यवेभ्यः क्रियः ॥ १९ विपराभ्यां जेः ॥ २० आङो दोऽनास्यविहरणे ॥ १ ॥ २१ क्रीडोऽनुसंपरिभ्यश्च ॥ २२ समवप्रविभ्यः स्थः ॥ २३ प्रकाशनस्थेयाख्ययोश्च ॥ २४ ॥ उदोऽनूर्ध्वकर्मणि ॥ २५ उपान्मन्त्रकरणे ॥ २६ अकर्मकाच्च ॥ २७ उद्विभ्यां तपः ॥ २८ आङो यमहनः ॥ २९ समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः ॥ ३० निसमुपविभ्यो ह्वः ॥ ३१ स्पर्धा-यामाङः ॥ ३२ गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः ॥ ३३ अधेः प्रसहने ॥ ३४ वेः शब्दकर्मणः ॥ ३५ अकर्मकाच्च ॥ ३६ संमाननोत्सञ्जनाचार्यकरण-ज्ञानभृतिविगणनव्ययेषु नियः ॥ ३७ कर्तृस्थे चाशरीरे कर्मणि ॥ ३८ वृत्तिसर्गतायनेषु क्रमः ॥ ३९ उपपराभ्याम् ॥ ४० आङ उद्गमने ॥ २ ॥ ४१ वेः पादविहरणे ॥ ४२ प्रोपाभ्यां समर्थाभ्याम् ॥ ४३ अनुपसर्गाद्वा ॥ ४४ अपह्नवे ज्ञः ॥ ४५ अकर्म-काच्च ॥ ४६ संप्रतिभ्यामनाध्याने ॥ ४७ भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ॥ ४८ व्यक्तवाचां समुच्चारणे ॥ ४९ अनोरकर्मकात् ॥ ५० विभाषा विप्रलापे ॥ ५१ अवाद्ग्रः ॥ ५२ समः प्रतिज्ञाने ॥ ५३ उदश्चरः सकर्मकात् ॥ ५४ समस्तृतीया-युक्तात् ॥ ५५ दाणश्च सा चेच्चतुर्थ्यर्थे ॥ ५६ ॥ उपाद्यमः स्वकरणे ॥ ५७ ज्ञाश्रुस्मृदृशां सनः ॥ ५८ नानोर्ज्ञः ॥ ५९ प्रत्याङ्भ्यां श्रुवः ॥ ६० शदेः शितः ॥ ३ ॥ ६१ म्रियते-र्लुङ्लिङोश्च ॥ ६२ पूर्ववत्सनः ॥ ६३ आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य ॥ ६४ प्रोपाभ्यां युजेरयज्ञपात्रेषु ॥ ६५ समः क्ष्णुवः ॥ ६६ भुजोऽनवने ॥ ६७ णेरणौ यत्कर्म णौ चेत्स कर्ताऽनाध्याने ॥ ६८ भीस्म्योर्हेतुभये ॥ ६९ गृधिवञ्च्योः प्रलम्भने ॥ ७० लियः संमा-ननशालिनीकरणयोश्च ॥ ७१ मिथ्योपपदात्कृञोऽभ्यासे ॥ ७२ स्वरितञितः कर्त्रभि-प्राये क्रियाफले ॥ ७३ अपाद्वदः ॥ ७४ णिचश्च ॥ ७५ समुदाङ्भ्यो यमोऽग्रन्थे ॥ ७६ अनुपसर्गाज्ज्ञः ॥ ७७ विभाषोपपदेन प्रतीयमाने ॥ ७८ शेषात्कर्तरि परस्मैपदम् ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

७९ अनुपराभ्यां कृञः ॥ ८० अभिप्रत्यतिभ्यः क्षिपः ॥ ४ ॥ ८१ प्राद्वहः ॥ ८२ परेर्मृषः ॥ ८३ व्याङ्परिभ्यो रमः ॥ ८४ उपाच्च ॥ ८५ विभाषाकर्मकात् ॥ ८६ बुधयुधनशजनेङ्प्रुद्रुस्रुभ्योणेः ॥ ८७ निगरणचलनार्थेभ्यश्च ॥ ८८ अणावकर्मकाच्चित्तवत्कर्तृकात् ॥ ८९ न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ॥ ९० वा क्यषः ॥ ९१ द्युद्भ्यो लुङि ॥ ९२ वृद्भ्यः स्यसनोः ॥ ९३ लुटि च क्लृपः ॥ "भूवादयः क्रीडोनु वेःपाद म्रियतेः प्राद्वहस्त्रयोदश" ॥

---

## चतुर्थः पादः ।

१ आ कडारादेका संज्ञा ॥ २ विप्रतिषेधे परं कार्यम् ॥ ३ यू स्त्र्याख्यौ नदी ॥ ४ नेयङुवङ्स्थानावस्त्री ॥ ५ वामि ॥ ६ ङिति ह्रस्वश्च ॥ ७ शेषो घ्यसखि ॥ ८ पतिः समास एव ॥ ९ षष्ठीयुक्तश्छन्दसि वा ॥ १० ह्रस्वं लघु ॥ ११ संयोगे गुरु ॥ १२ दीर्घं च ॥ १३ यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् ॥ १४ सुप्तिङन्तं पदम् ॥ १५ नः क्ये ॥ १६ सिति च ॥ १७ स्वादिष्वसर्वनामस्थाने ॥ १८ यचि भम् ॥ १९ तसौ मत्वर्थे ॥ २० अयस्मयादीनि छन्दसि ॥ १ ॥ २१ बहुषु बहुवचनम् ॥ २२ द्व्येकयोर्द्विवचनैकवचने ॥ २३ कारके ॥ २४ ध्रुवमपायेऽपादानम् ॥ २५ भीत्रार्थानां भयहेतुः ॥ २६ पराजेरसोढः ॥ २७ वारणार्थानामीप्सितः ॥ २८ अन्तर्धौ येनादर्शनमिच्छति ॥ २९ आख्यातोपयोगे ॥ ३० जनिकर्तुः प्रकृतिः ॥ ३१ भुवः प्रभवः ॥ ३२ कर्मणा यमभिप्रैति स संप्रदानम् ॥ ३३ रुच्यर्थानां प्रीयमाणः ॥ ३४ श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ॥ ३५ धारेरुत्तमर्णः ॥ ३६ स्पृहेरीप्सितः ॥ ३७ क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ॥ ३८ क्रुधद्रुहोरुपसृष्टयोः कर्म ॥ ३९ राधीक्ष्योर्यस्य विप्रश्नः ॥ ४० प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता ॥ २ ॥ ४१ अनुप्रतिगृणश्च ॥ ४२ साधकतमं करणम् ॥ ४३ दिवः कर्म च ॥ ४४ परिक्रयणे संप्रदानमन्यतरस्याम् ॥ ४५ आधारोऽधिकरणम् ॥ ४६ अधिशीङ्स्थासां कर्म ॥ ४७ अभिनिविशश्च ॥ ४८ उपान्वध्याङ्वसः ॥ ४९ कर्तुरीप्सिततमं कर्म ॥ ५० तथायुक्तं चानीप्सितम् ॥ ५१ अकथितं च ॥ ५२ गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ ॥ ५३ हृक्रोरन्यतरस्याम् ॥ ५४ स्वतन्त्रः कर्ता ॥ ५५ तत्प्रयोजको हेतुश्च ॥ ५६ प्राग्रीश्वरान्निपाताः ॥ ५७ चादयोऽसत्त्वे ॥ ५८ प्रादयः ॥ ५९ उपसर्गाः क्रियायोगे ॥ ६० गतिश्च ॥ ६१ ऊर्यादिच्विडाचश्च ॥ ६२ अनुकरणं चानितिपरम् ॥ ६३ आदरानादरयोः सदसती ॥ ६४ भूषणेऽलम् ॥ ६५ अन्तरपरिग्रहे ॥ ६६ कणेमनसी श्रद्धाप्रतीघाते ॥ ६७ पुरोऽव्ययम् ॥ ६८ अस्तं च ॥ ६९ अच्छ गत्यर्थवदेषु ॥ ७० अदोऽनुपदेशे ॥ ७१ तिरोऽन्तर्धौ ॥ ७२ विभाषा कृञि ॥ ७३ उपाजेऽन्वाजे ॥ ७४ साक्षात्प्रभृतीनि च ॥ ७५ अनत्या-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

धान उरसिमनसी ॥ ७६ मध्येपदे निवचने च ॥ ७७ नित्यं हस्ते पाणावुपयमने ॥ ७८ प्राध्वं बन्धने ॥ ७९ जीविकोपनिषदावौपम्ये ॥ ८० ते प्राग्धातोः ॥ ४ ॥ ८१ छन्दसि परेऽपि ॥ ८२ व्यवहिताश्च ॥ ८३ कर्मप्रवचनीयाः ॥ ८४ अनुर्लक्षणे ॥ ८५ तृतीयार्थे ॥ ८६ हीने ॥ ८७ उपोधिके च ॥ ८८ अपपरी वर्जने ॥ ८९ आङ्मर्यादावचने ॥ ९० लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः ॥ ९१ अभिरभागे ॥ ९२ प्रतिः प्रतिनिधिप्रतिदानयोः ॥ ९३ अधिपरी अनर्थकौ ॥ ९४ सुः पूजायाम् ॥ ९५ अतिरतिक्रमणे च ॥ ९६ अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु ॥ ९७ अधिरीश्वरे ॥ ९८ विभाषा कृञि ॥ ९९ लः परस्मैपदम् ॥ १०० तङानावात्मनेपदम् ॥ ५ ॥ १०१ तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ॥ १०२ तान्येकवचनद्विवचनबहुवचनान्येकशः ॥ १०३ सुपः ॥ १०४ विभक्तिश्च ॥ १०५ युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ॥ १०६ प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ॥ १०७ अस्मद्युत्तमः ॥ १०८ शेषे प्रथमः ॥ १०९ परः सन्निकर्षः संहिता ॥ ११० विरामोऽवसानम् ॥ “आकडाराद्बहुष्वनुप्रतिगृण ऊर्यादि छन्दसि तिङो दश” ॥ इति प्रथमोऽध्यायः ॥

---

# द्वितीयोऽध्यायः ।

## प्रथमः पादः ।

१ समर्थः पदविधिः ॥ २ सुबामन्त्रिते पराङ्गवत्स्वरे ॥ ३ प्राक्कडारात्समासः ॥ ४ सह सुपा ॥ ५ अव्ययीभावः ॥ ६ अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु ॥ ७ यथासादृश्ये ॥ ८ यावदवधारणे ॥ ९ सुप्प्रतिना मात्रार्थे ॥ १० अक्षशलाकासंख्याः परिणा ॥ ११ विभाषा ॥ १२ अपपरिबहिरञ्चवः पञ्चम्या ॥ १३ आङ्मर्यादाभिविध्योः ॥ १४ लक्षणेनाभिप्रती आभिमुख्ये ॥ १५ अनुर्यत्समया ॥ १६ यस्य चायामः ॥ १७ तिष्ठद्गुप्रभृतीनि च ॥ १८ पारेमध्ये षष्ठ्या वा ॥ १९ संख्या वंश्येन ॥ २० नदीभिश्च ॥ १ ॥ २१ अन्यपदार्थे च संज्ञायाम् ॥ २२ तत्पुरुषः ॥ २३ द्विगुश्च ॥ २४ द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ॥ २५ स्वयं क्तेन ॥ २६ खट्वा क्षेपे ॥ २७ सामि ॥ २८ कालाः ॥ २९ अत्यन्तसंयोगे च ॥ ३० तृतीया तत्कृतार्थेन गुणवचनेन ॥ ३१ पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ॥ ३२ कर्तृकरणे कृता बहुलम् ॥ ३३ कृत्यैरधिकार्थवचने ॥ ३४ अन्नेन व्यञ्जनम् ॥ ३५ भक्ष्येण मिश्रीकरणम् ॥ ३६ चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ॥ ३७ पञ्चमी भयेन ॥ ३८ अपेतापोढमुक्तपतितापत्रस्तैरल्पशः ॥ ३९ स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ॥ ४० सप्तमी शौण्डैः ॥ २ ॥ ४१ सिद्धशुष्कपक्वबन्धैश्च ॥ ४२ ध्वाङ्क्षेण क्षेपे ॥ ४३ कृत्यैर्ऋणे ॥ ४४ संज्ञायाम् ॥ ४५ क्तेनाहोरात्रावयवाः ॥ ४६ तत्र ॥ ४७ क्षेपे ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

४८ पात्रेसमितादयश्च ॥ ४९ पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ॥ ५० दिक्संख्ये संज्ञायाम् ॥ ५१ तद्धितार्थोत्तरपदसमाहारेच ॥ ५२ संख्यापूर्वो द्विगुः ॥ ५३ कुत्सितानि कुत्सनैः ॥ ५४ पापाणके कुत्सितैः ॥ ५५ उपमानानि सामान्यवचनैः ॥ ५६ उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ॥ ५७ विशेषणं विशेष्येण बहुलम् ॥ ५८ पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च ॥ ५९ श्रेण्यादयः कृतादिभिः ॥ ६० क्तेन नञ्विशिष्टेनानञ् ॥ ३ ॥ ६१ सन्महत्परमोत्कृष्टाः पूज्यमानैः ॥ ६२ वृन्दारकनागकुञ्जरैः पूज्यमानम् ॥ ६३ कतरकतमौ जातिपरिप्रश्ने ॥ ६४ किं क्षेपे ॥ ६५ पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः ॥ ६६ प्रशंसावचनैश्च ॥ ६७ युवा खलतिपलितवलिनजरतीभिः ॥ ६८ कृत्यतुल्याख्या अजात्या ॥ ६९ वर्णो वर्णेन ॥ ७० कुमारश्रमणादिभिः ॥ ७१ चतुष्पादो गर्भिण्या ॥ ७२ मयूरव्यंसकादयश्च ॥ "समर्थोऽन्यपदार्थे च सिद्धशुष्क सन्मह द्वादश" ॥

---

## द्वितीयः पादः ।

१ पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ॥ २ अर्धं नपुंसकम् ॥ ३ द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ॥ ४ प्राप्तापन्ने च द्वितीयया ॥ ५ कालाः परिमाणिना ॥ ६ नञ् ॥ ७ ईषदकृता ॥ ८ षष्ठी ॥ ९ याजकादिभिश्च ॥ १० न निर्धारणे ॥ ११ पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ॥ १२ क्तेन च पूजायाम् ॥ १३ अधिकरणवाचिना च ॥ १४ कर्मणि च ॥ १५ तृजकाभ्यां कर्तरि ॥ १६ कर्तरि च ॥ १७ नित्यं क्रीडाजीविकयोः ॥ १८ कुगतिप्रादयः ॥ १९ उपपदमतिङ् ॥ २० अमैवाव्ययेन ॥ १ ॥ २१ तृतीयाप्रभृतीन्यन्यतरस्याम् ॥ २२ क्त्वा च ॥ २३ शेषो बहुव्रीहिः ॥ २४ अनेकमन्यपदार्थे ॥ २५ संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये ॥ २६ दिङ्नामान्यन्तराले ॥ २७ तत्र तेनेदमिति सरूपे ॥ २८ तेन सहेति तुल्ययोगे ॥ २९ चार्थे द्वन्द्वः ॥ ३० उपसर्जनं पूर्वम् ॥ ३१ राजदन्तादिषु परम् ॥ ३२ द्वन्द्वे घि ॥ ३३ अजाद्यदन्तम् । ३४ अल्पाच्तरम् ॥ ३५ सप्तमीविशेषणे बहुव्रीहौ ॥ ३६ निष्ठा ॥ ३७ वाहिताग्न्यादिषु ॥ ३८ कडाराः कर्मधारये ॥ "पूर्वापराधरोत्तरं तृतीयाप्रभृतीन्यष्टादश" ॥

---

## तृतीयः पादः ।

१ अनभिहिते ॥ २ कर्मणि द्वितीया ॥ ३ तृतीया च होश्छन्दसि ॥ ४ अन्तरान्तरेणयुक्ते ॥ ५ कालाध्वनोरत्यन्तसंयोगे ॥ ६ अपवर्गे तृतीया ॥ ७ सप्तमीपञ्चम्यौ कारकमध्ये ॥ ८ कर्मप्रवचनीययुक्ते द्वितीया ॥ ९ यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ॥ १० पञ्चम्यपाङ्परिभिः ११ प्रतिनिधिप्रतिदाने च यस्मात् ॥ १२ गत्यर्थकर्मणि द्वि-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तीयाचतुर्थ्यौ चेष्टायामनध्वनि ॥ १३ चतुर्थी संप्रदाने ॥ १४ क्रियार्थोपपदस्य च कर्मणि स्थानिनः ॥ १५ तुमर्थाच्च भाववचनात् ॥ १६ नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च ॥ १७ मन्यकर्मण्यनादरे विभाषाप्राणिषु ॥ १८ कर्तृकरणयोस्तृतीया ॥ १९ सहयुक्तेऽप्रधाने ॥ २० येनाङ्गविकारः ॥ १ ॥ २१ इत्थंभूतलक्षणे ॥ २२ संज्ञोऽन्यतरस्यां कर्मणि ॥ २३ हेतौ ॥ २४ अकर्तर्यृणे पञ्चमी ॥ २५ विभाषा गुणेऽस्त्रियाम् ॥ २६ षष्ठी हेतुप्रयोगे ॥ २७ सर्वनाम्नस्तृतीया च ॥ २८ अपादाने पञ्चमी ॥ २९ अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते ॥ ३० षष्ठ्यतसर्थप्रत्ययेन ॥ ३१ एनपा द्वितीया ॥ ३२ पृथग्विनानानाभिस्तृतीयान्यतरस्याम् ३३ करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ॥ ३४ दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ॥ ३५ दूरान्तिकार्थेभ्यो द्वितीया च ॥ ३६ सप्तम्यधिकरणे च ॥ ३७ यस्य च भावेन भावलक्षणम् ॥ ३८ षष्ठी चानादरे ॥ ३९ स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ॥ ४० आयुक्तकुशलाभ्यां चासेवायाम् ॥ २ ॥ ४१ यतश्च निर्धारणम् ॥ ४२ पञ्चमी विभक्ते ॥ ४३ साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ॥ ४४ प्रसितोत्सुकाभ्यां तृतीया च ॥ ४५ नक्षत्रे च लुपि ॥ ४६ प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ॥ ४७ संबोधने च ॥ ४८ सामन्त्रितम् ॥ ४९ एकवचनं संबुद्धिः ॥ ५० षष्ठी शेषे ॥ ५१ ज्ञोऽविदर्थस्य करणे ॥ ५२ अधीगर्थदयेशां कर्मणि ॥ ५३ कृञः प्रतियत्ने ॥ ५४ रुजार्थानां भाववचनानामज्वरेः ॥ ५५ आशिषि नाथः ॥ ५६ जासिनिप्रहणनाटक्राथपिषां हिंसायाम् ॥ ५७ व्यवहृपणोः समर्थयोः ॥ ५८ दिवस्तदर्थस्य ॥ ५९ विभाषोपसर्गे ॥ ६० द्वितीया ब्राह्मणे ॥ ३ ॥ ६१ प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने ॥ ६२ चतुर्थ्यर्थे बहुलं छन्दसि ॥ ६३ यजेश्च करणे ॥ ६४ कृत्वोर्थप्रयोगे कालेऽधिकरणे ॥ ६५ कर्तृकर्मणोः कृति ॥ ६६ उभयप्राप्तौ कर्मणि ॥ ६७ क्तस्य च वर्तमाने ॥ ६८ अधिकरणवाचिनश्च ॥ ६९ न लोकाव्ययनिष्ठाखलर्थतृनाम् ॥ ७० अकेनोर्भविष्यदाधमर्ण्ययोः ॥ ७१ कृत्यानां कर्तरि वा ॥ ७२ तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् ॥ ७३ चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ॥ "अनभिहित इत्थं ततश्च प्रेष्यब्रुवोस्त्रयोदश" ॥

---

## चतुर्थः पादः ।

१ द्विगुरेकवचनम् ॥ २ द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ॥ ३ अनुवादे चरणानाम् ॥ ४ अध्वर्युक्रतुरनपुंसकम् ॥ ५ अध्ययनतोऽविप्रकृष्टाख्यानाम् ॥ ६ जातिरप्राणिनाम् ॥ ७ विशिष्टलिङ्गो नदीदेशोऽग्रामाः ॥ ८ क्षुद्रजन्तवः ॥ ९ येषां च विरोधः शाश्वतिकः ॥ १० शूद्राणामनिरवसितानाम् ॥ ११ गवाश्वप्रभृतीनि च ॥ १२ विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् ॥ १३ विप्रतिषिद्धं चानधिकरण

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वाचि ॥ १४ न दधिपयआदीनि ॥ १५ अधिकरणैतावत्त्वे च ॥ १६ विभाषा समीपे ॥ १७ स नपुंसकम् ॥ १८ अव्ययीभावश्च ॥ १९ तत्पुरुषोऽनञ्कर्मधारयः ॥ २० संज्ञायां कन्थोशीनरेषु ॥ १ ॥ २१ उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ॥ २२ छाया बाहुल्ये ॥ २३ सभा राजामनुष्यपूर्वा ॥ २४ अशाला च ॥ २५ विभाषा सेनासुराच्छायाशालानिशानाम् ॥ २६ परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ॥ २७ पूर्ववदश्ववडवौ ॥ २८ हेमन्तशिशिरावहोरात्रे च च्छन्दसि ॥ २९ रात्राह्नाहाः पुंसि ॥ ३० अपथं नपुंसकम् ॥ ३१ अर्धर्चाः पुंसि च ॥ ३२ इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ॥ ३३ एतदस्त्रतसोस्त्रतसौ चानुदात्तौ ॥ ३४ द्वितीयाटौस्स्वेनः ॥ ३५ आर्धधातुके ॥ ३६ अदो जग्धिर्ल्यप्ति किति ॥ ३७ लुङ्सनोर्घस्लृ ॥ ३८ घञपोश्च ॥ ३९ बहुलं छन्दसि ॥ ४० लिट्यन्यतरस्याम् ॥ २ ॥ ४१ वेञो वयिः ॥ ४२ हनो वध लिङि ॥ ४३ लुङि च ॥ ४४ आत्मनेपदेष्वन्यतरस्याम् ॥ ४५ इणो गा लुङि ॥ ४६ णौ गमिरबोधने ॥ ४७ सनि च ॥ ४८ इङश्च ॥ ४९ गाङ् लिटि ॥ ५० विभाषा लुङ्लृङोः ॥ ५१ णौ च संश्चङोः। ५२ अस्तेर्भूः ॥ ५३ ब्रुवो वचिः ॥ ५४ चक्षिङः ख्याञ् ॥ ५५ वा लिटि ॥ ५६ अजेर्व्यघञपोः ॥ ५७ वा यौ ॥ ५८ ण्यक्षत्रियार्षञितो यूनि लुगणिञोः ॥ ५९ पैलादिभ्यश्च ॥ ६० इञः प्राचाम् ॥ ३ ॥ ६१ न तौल्वलिभ्यः ॥ ६२ तद्राजस्य बहुषु तेनैवास्त्रियाम् ॥ ६३ यस्कादिभ्यो गोत्रे ॥ ६४ यञञोश्च ॥ ६५ अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च ॥ ६६ बह्वच इञः प्राच्यभरतेषु ॥ ६७ न गोपवनादिभ्यः ॥ ६८ तिककितवादिभ्यो द्वन्द्वे ॥ ६९ उपकादिभ्योऽन्यतरस्यामद्वन्द्वे ॥ ७० आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ॥ ७१ सुपो धातुप्रातिपदिकयोः ॥ ७२ अदिप्रभृतिभ्यः शपः ॥ ७३ बहुलं छन्दसि ॥ ७४ यङोऽचि च ॥ ७५ जुहोत्यादिभ्यः श्लुः ॥ ७६ बहुलं छन्दसि ॥ ७७ गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ॥ ७८ विभाषा घ्राधेट्शाच्छासः ॥ ७९ तनादिभ्यस्तथासोः ॥ ८० मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः ॥ ४ ॥ ८१ आमः ॥ ८२ अव्ययादाप्सुपः ॥ ८३ नाव्ययीभावादतोऽम्त्वपञ्चम्याः ॥ ८४ तृतीयासप्तम्योर्बहुलम् ॥ ८५ लुटः प्रथमस्य डारौरसः ॥ "द्विगुरुपज्ञोपक्रमंवेञोवयिर्नतौल्वलिभ्य आमः पञ्च" ॥ इति द्वितीयोऽध्यायः ॥

---

# तृतीयोऽध्यायः ।

## प्रथमः पादः ।

१ प्रत्ययः ॥ २ परश्च ॥ ३ आद्युदात्तश्च ॥ ४ अनुदात्तौ सुप्पितौ ॥ ५ गुप्तिज्किद्भ्यः सन् ॥ मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ॥ ७ धातोः कर्मणः समानकर्तृकादिच्छायां वा ॥ ८ सुप आत्मनः क्यच् ॥ ९ काम्यच्च ॥ १० उपमानादाचारे ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

११ कर्तुः क्यङ्सलोपश्च ॥ १२ भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ॥ १३ लोहितादिडाज्भ्यः क्यष् ॥ १४ कष्टाय क्रमणे ॥ १५ कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ॥ १६ बाष्पोष्मभ्यामुद्वमने ॥ १७ शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ॥ १८ सुखादिभ्यः कर्तृवेदनायाम् ॥ १९ नमोवरिवश्चित्रङः क्यच् ॥ २० पुच्छभाण्डचीवराण्णिङ् ॥ १ ॥ २१ मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ॥ २२ धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ॥ २३ नित्यं कौटिल्ये गतौ ॥ २४ लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् ॥ २५ सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ॥ २६ हेतुमति च ॥ २७ कण्ड्वादिभ्यो यक् ॥ २८ गुपूधूपविच्छिपणिपनिभ्य आयः ॥ २९ ऋतेरीयङ् ॥ ३० कमेर्णिङ् ॥ ३१ आयादय आर्धधातुके वा ॥ ३२ सनाद्यन्ता धातवः ॥ ३३ स्यतासी लृलुटोः ॥ ३४ सिब्बहुलं लेटि ॥ ३५ कास्प्रत्ययादाममन्त्रे लिटि ॥ ३६ इजादेश्च गुरुमतोऽनृच्छः ॥ ३७ दयायासश्च ॥ ३८ उषविदजागृभ्योऽन्यतरस्याम् ॥ ३९ भीह्रीभृहुवां श्लुवच्च ॥ ४० कृञ्चानुप्रयुज्यते लिटि ॥ २ ॥ ४१ ॥ विदांकुर्वन्त्वित्यन्यतरस्याम् ॥ ४२ अभ्युत्सादयांप्रजनयांचिकयांरमयामकः पावयांक्रियाद्विदामक्रन्निति च्छन्दसि ॥ ४३ च्लि लुङि ॥ ४४ च्लेः सिच् ॥ ४५ शल इगुपधादनिटः क्सः ॥ ४६ श्लिष आलिङ्गने ॥ ४७ न दृशः ॥ ४८ णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ॥ ४९ विभाषा धेट्श्व्योः ॥ ५० गुपेश्छन्दसि ॥ ५१ नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः ॥ ५२ अस्यतिवक्तिख्यातिभ्योऽङ् ॥ ५३ लिपिसिचिह्वश्च ॥ ५४ आत्मनेपदेष्वन्यतरस्याम् ॥ ५५ पुषादिद्युताद्यॢदितः परस्मैपदेषु ॥ ५६ सर्तिशास्त्यर्तिभ्यश्च ॥ ५७ इरितो वा ॥ ५८ जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ॥ ५९ कृमृदृरुहिभ्यश्छन्दसि ॥ ६० चिण्ते पदः ॥ ३ ॥ ६१ दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ॥ ६२ अचः कर्मकर्तरि ॥ ६३ दुहश्च ॥ ६४ न रुधः ॥ ६५ तपोऽनुतापे च ॥ ६६ चिण्भावकर्मणोः ॥ ६७ सार्वधातुके यक् ॥ ६८ कर्तरि शप् ॥ ६९ दिवादिभ्यः श्यन् ॥ ७० वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ॥ ७१ यसोऽनुपसर्गात् ॥ ७२ संयसश्च ॥ ७३ स्वादिभ्यः श्नुः ॥ ७४ श्रुवः शृ च ॥ ७५ अक्षोऽन्यतरस्याम् ॥ ७६ तनूकरणे तक्षः ॥ ७७ तुदादिभ्यः शः ॥ ७८ रुधादिभ्यः श्नम् ॥ ७९ तनादिकृञ्भ्य उः ॥ ८० धिन्विकृण्व्योर च ॥ ४ ॥ ८१ क्र्यादिभ्यः श्ना ॥ ८२ स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ॥ ८३ ॥ हलः श्नः शानज्झौ ॥ ८४ छन्दसि शायजपि ॥ ८५ व्यत्ययो बहुलम् ॥ ८६ लिङ्याशिष्यङ् ॥ ८७ कर्मवत्कर्मणा तुल्यक्रियः ॥ ८८ तपस्तपःकर्मकस्यैव ॥ ८९ न दुहस्नुनमां यक्चिणौ ॥ ९० कुषिरजोः प्राचां श्यन्परस्मैपदं च ॥ ९१ धातोः ॥ ९२ तत्रोपपदं सप्तमीस्थम् ॥ ९३ कृदतिङ् ॥ ९४ वासरूपोऽस्त्रियाम् ॥ ९५ कृत्याः प्राङ्ण्वुलः ॥ ९६ तव्यत्तव्यानीयरः ॥ ९७ अचो यत् ॥


CC.0- Jangamwadi Math Collection. Digitized by eGangotri

९८ पोरदुपधात् ॥ ९९ शकिसहोश्च ॥ १०० गदमदचरयमश्चानुपसर्गे ॥ ९ ॥ १०१ अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु ॥ १०२ वह्यं करणम् ॥ १०३ अर्यः स्वामिवैश्ययोः ॥ १०४ उपसर्या काल्या प्रजने ॥ १०५ अजर्यं संगतम् ॥ १०६ वदः सुपि क्यप्च ॥ १०७ भुवो भावे ॥ १०८ हनस्त च ॥ १०९ एतिस्तुशास्वृदृजुषः क्यप् ॥ ११० ऋदुपधाच्चाक्लृपिचृतेः ॥ १११ ई च खनः ॥ ११२ भृञोऽसंज्ञायाम् ॥ ११३ मृजेर्विभाषा ॥ ११४ राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ॥ ११५ भिद्यो-द्ध्यौ नदे ॥ ११६ पुष्यसिध्यौ नक्षत्रे ॥ ११७ विपूयविनीयजित्या मुञ्जकल्कहलिषु ॥ ११८ प्रत्यपिभ्यां ग्रहेश्छन्दसि ॥ ११९ पदास्वैरिबाह्यापक्ष्येषु च ॥ १२० विभाषा कृवृषोः ॥ ६ ॥ १२१ युग्यं च पत्रे ॥ १२२ अमावस्यदन्यतरस्याम् ॥ ११३ छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्य-भाव्यस्ताव्योपचाय्यपृडानि ॥ १२४ ऋहलोर्ण्यत् ॥ १२५ ओरावश्यके ॥ १२६ आसु-युवपिरपित्रपिचमश्च ॥ १२७ आनाय्योऽनित्ये ॥ १२८ प्रणाय्योऽसंमतौ ॥ १२९ पाय्यसांनाय्यनिकाय्यधाय्यामानहविर्निवाससामिधेनीषु ॥ १३० क्रतौ कुण्डपा-य्यसंचाय्यौ ॥ १३१ अग्नौ परिचाय्योपचाय्यसमूह्याः ॥ १३२ चित्याग्निचित्ये च ॥ १३३ ण्वुल्तृचौ ॥ १३४ नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ॥ १३५ इगुपधज्ञाप्रीकिरः कः ॥ १३६ आतश्चोपसर्गे ॥ १३७ पाघ्राध्माधेट्दृशः शः ॥ १३८ अनुपसर्गाल्लिम्प-विन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ॥ १३९ ददातिदधात्योर्विभाषा ॥ १४० ज्व-लितिकसन्तेभ्यो णः ॥ ७ ॥ १४१ शाद्धचधास्रुसंस्वतीणवसावहृलिहश्लिषश्वसश्च ॥ १४२ दुन्योरनुपसर्गे ॥ १४३ विभाषा ग्रहः ॥ १४४ गेहे कः ॥ १४५ शिल्पिनि ष्वुन् ॥ १४६ गस्थकन् ॥ १४७ ण्युट् च ॥ १३८ हश्च व्रीहिकालयोः १४९ प्रुसृल्वः समभिहारे वुन् ॥ १५० आशिषि च ॥ "प्रत्ययो मुण्डविदांदीपजनक्र्यादिभ्योवध युग्यं च श्याद्व्यधादश" ॥

---

## द्वितीयः पादः ॥

१ कर्मण्यण् ॥ २ ह्वावामश्च ॥ ३ आतोऽनुपसर्गे कः ॥ ४ सुपि स्थः ॥ ५ तुन्द-शोकयोः परिमृजापनुदोः ॥ ६ प्रे दाज्ञः ॥ ७ समि ख्यः ॥ ८ गापोष्टक् ॥ ९ हरते-रनुद्यमनेऽच् ॥ १० ॥ वयसि च ॥ ११ आङि ताच्छील्ये ॥ १२ अर्हः ॥ १३ स्तम्ब-कर्णयो रमिजपोः ॥ १४ शमि धातोः संज्ञायाम् ॥ १५ अधिकरणे शेतेः ॥ १६ च-रेष्टः ॥ १७ भिक्षासेनादायेषु च ॥ १८ पुरोग्रतोग्रेषु सर्तेः ॥ १९ पूर्वे कर्तरि ॥ २० कृञो हेतुताच्छील्यानुलोम्येषु ॥ १ ॥ २१ दिवाविभानिशाप्रभाभास्कारान्तानन्ता-दिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुःषु ॥ २२ क-र्मणि भृतौ ॥ २३ न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ॥ २४ स्तम्बशकृतोरिन् ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

२५ हरतेर्दृतिनाथयोः पशौ ॥ २६ फलेग्रहिरात्मम्भरिश्च ॥ २७ छन्दसि वनसनरक्षिमथाम् ॥ २८ एजेः खश् ॥ २९ नासिकास्तनयोर्ध्माधेटोः ॥ ३० नाडीमुष्ट्योश्च ॥ ३१ उदि कूले रुजिवहोः ॥ ३२ वहाभ्रे लिहः ॥ ३३ परिमाणे पचः ॥ ३४ मितनखे च ॥ ३५ विध्वरुषोस्तुदः ॥ ३६ असूर्यललाटयोर्दृशितपोः ॥ ३७ उग्रंपश्येरंमदपाणिंधमाश्च ॥ ३८ प्रियवशे वदः खच् ॥ ३९ द्विषत्परयोस्तापेः ॥ ४० वाचि यमो व्रते ॥२॥ ४१ पूःसर्वयोर्दारिसहोः ॥ ४२ सर्वकूलाभ्रकरीषेषु कषः ॥ ४३ मेघर्तिभयेषु कृञः ॥ ४४ क्षेमप्रियमद्रेऽण्च ॥ ४५ आशिते भुवः करणभावयोः ॥ ४६ संज्ञायां भृतृवृजिधारिसहितपिदमः ॥ ४७ गमश्च ॥ ४८ अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ॥ ४९ आशिषि हनः ॥ ५० अपे क्लेशतमसोः ॥ ५१ कुमारशीर्षयोर्णिनिः ॥ ५२ लक्षणे जायापत्योष्टक् ॥ ५३ अमनुष्यकर्तृके च ॥ ५४ शक्तौ हस्तिकपाटयोः ॥ ५५ पाणिघताडघौ शिल्पिनि ॥ ५६ आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ॥ ५७ कर्तरि भुवः खिष्णुच्खुकञौ ॥ ५८ स्पृशोऽनुदके क्विन् ॥ ५९ ऋत्विग्दधृक्स्रग्दिग्गुष्णिगञ्चुयुजिक्रुञ्चां च ॥ ६० त्यदादिषु दृशोऽनालोचने कञ्च ॥ ३ ॥ ६१ सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनिराजामुपसर्गेऽपि क्विप् ॥ ६२ भजो ण्विः ॥ ६३ छन्दसि सहः ॥ ६४ वहश्च ॥ ६५ कव्यपुरीषपुरीष्येषु ञ्युट् ॥ ६६ हव्येऽनन्तःपादम् ॥ ६७ जनसनखनक्रमगमो विट् ॥ ६८ अदोऽनन्ने ॥ ६९ क्रव्ये च ॥ ७० दुहः कब्घश्च ॥ ७१ मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ॥ ७२ अवे यजः ॥ ७३ विजुपे छन्दसि ॥ ७४ आतो मनिन्क्वनिब्वनिपश्च ॥ ७५ अन्येभ्योऽपि दृश्यन्ते ॥ ७६ क्विप्च ॥ ७७ स्थः क च ॥ ७८ सुप्यजातौ णिनिस्ताच्छील्ये ॥ ७९ कर्तर्युपमाने ॥ ८० व्रते ॥४॥ ८१ बहुलमाभीक्ष्ण्ये ॥ ८२ मनः ॥ ८३ आत्ममाने खश्च ॥ ८४ भूते ॥ ८५ करणे यजः ॥ ८६ कर्मणि हनः ॥ ८७ ब्रह्मभ्रूणवृत्रेषु क्विप् ॥ ८८ बहुलं छन्दसि ॥ ८९ सुकर्मपापमन्त्रपुण्येषु कृञः ॥ ९० ॥ सोमे सुञः ॥ ९१ अग्नौ चेः ॥ ९२ कर्मण्यग्न्याख्यायाम् ॥ ९३ कर्मणीनिविक्रियः ॥ ९४ दृशेः क्वनिप् ॥ ९५ राजनि युधिकृञः ॥ ९६ सहे च ॥ ९७ सप्तम्यां जनेर्डः ॥ ९८ पञ्चम्यामजातौ ॥ ९९ उपसर्गे च संज्ञायाम् १०० अनौ कर्मणि ॥ ५ ॥ १०१ अन्येष्वपि दृश्यते ॥ १०२ निष्ठा ॥ १०३ सुयजोर्ङ्वनिप् ॥ १०४ गीर्यतेरतृन् ॥ १०५ छन्दसि लिट् ॥ १०६ लिटः कानज्वा ॥ १०७ क्वसुश्च ॥ १०८ भाषायां सदवसश्रुवः ॥ १०९ उपेयिवाननाश्वाननूचानश्च ॥ ११० लुङ् ॥ १११ अनद्यतने लङ् ॥ ११२ अभिज्ञावचने लृट् ॥ ११३ न यदि ॥ ११४ विभाषा साकाङ्क्षे ॥ ११५ परोक्षे लिट् ॥ ११६ हशश्वतोर्लङ् च ॥ ११७ प्रश्ने चासन्नकाले ॥ ११८ लट् स्मे ॥ ११९ अपरोक्षे च ॥ १२० ननौ पृष्टप्रतिवचने ॥ ६ ॥ १२१ नन्वोर्विभाषा ॥ १२२ पुरि लुङ् चास्मे ॥ १२३ वर्तमाने लट् ॥ १२४ लटः श-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तृशानचावप्रथमासमानाधिकरणे ॥ १२५ संबोधने च ॥ १२६ लक्षणहेत्वोः क्रियायाः ॥ १२७ तौ सत् ॥ १२८ पूङ्यजोः शानन् ॥ १२९ ताच्छील्यवयोवचनशक्तिषु चानश् ॥ १३० इङ्धार्योः शत्रकृच्छ्रिणि ॥ १३१ द्विषोऽमित्रे ॥ १३२ सुञो यज्ञसंयोगे ॥ १३३ अर्हः प्रशंसायाम् ॥ १३४ आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ॥ १३५ तृन् ॥ १३६ अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् ॥ १३७ णेश्छन्दसि ॥ १३८ भुवश्च ॥ १३९ ग्लाजिस्थश्च ग्स्नुः ॥ १४० त्रसिगृधिधृषिक्षिपेः क्नुः ॥ ७ ॥ १४१ शमित्यष्टाभ्यो घिनुण् ॥ १४२ संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च ॥ १४३ वौ कषलसकत्थस्रम्भः ॥ १४४ अपे च लषः ॥ १४५ प्रेलपसृद्रुमथवदवसः ॥ १४६ निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूञो वुञ् ॥ १४७ देविक्रुशोश्चोपसर्गे ॥ १४८ चलनशब्दार्थादकर्मकाद्युच् ॥ १४९ अनुदात्तेतश्च हलादेः ॥ १५० जुचंक्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः ॥ १५१ क्रुधमण्डार्थेभ्यश्च ॥ १५२ न यः ॥ १५३ सूददीपदीक्षश्च ॥ १५४ लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् ॥ १५५ जल्पभिक्षकुट्टलुण्टवृङः षाकन् ॥ १५६ प्रजोरिनिः ॥ १५७ जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च ॥ १५८ स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ॥ १५९ दाधेट्सिशदसदो रुः ॥ १६० सृघस्यदः क्मरच् ॥ ८ ॥ १६१ भञ्जभासमिदो घुरच् ॥ १६२ विदिभिदिच्छिदेः कुरच् ॥ १६३ इण्नशजिसर्तिभ्यः क्वरप् ॥ १६४ गत्वरश्च ॥ १६५ जागरूकः ॥ १६६ यजजपदशां यङः ॥ १६७ नमिकम्पिस्म्यजसकमहिंसदीपो रः ॥ १६८ सनाशंसभिक्ष उः ॥ १६९ विन्दुरिच्छुः ॥ १७० क्याच्छन्दसि ॥ १७१ आदृगमहनजनः किकिनौ लिट् च ॥ १७२ स्वपितृषोर्नजिङ् ॥ १७३ शॄवन्द्योरारुः ॥ १७४ भियः क्रुक्लुकनौ ॥ १७५ स्थेशभासपिसकसो वरच् ॥ १७६ यश्च यङः ॥ १७७ भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ॥ १७८ अन्येभ्योऽपि दृश्यते ॥ १७९ भुवः संज्ञान्तरयोः ॥ १८० विप्रसंभ्यो ड्वसंज्ञायाम् ॥ ९ ॥ १८१ धः कर्मणि ष्ट्रन् ॥ १८२ दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ॥ १८३ हलसूकरयोः पुवः ॥ १८४ अर्तिलूधूसूखनसहचर इत्रः ॥ १८५ पुवः संज्ञायाम् ॥ १८६ कर्तरि चर्षिदेवतयोः ॥ १८७ ञीतः क्तः ॥ १८८ मतिबुद्धिपूजार्थेभ्यश्च ॥

"कर्मणि दिवापूःसर्वसत्सूबहुलमन्येष्वपि नन्वोः शमिति भञ्जभासधाकर्मण्यष्टौ" ॥

---

## तृतीयः पादः ॥

१ उणादयो बहुलम् ॥ २ भूतेऽपि दृश्यन्ते ॥ ३ भविष्यति गम्यादयः ॥ ४ या-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वत्पुरानिपातयोर्लट् ॥ ५ विभाषा कदाकर्ह्योः ॥ ६ किंवृत्ते लिप्सायाम् ॥ ७ लिप्स्यमानसिद्धौ न ॥ ८ लोडर्थलक्षणे च ॥ ९ लिङ् चोर्ध्वमौहूर्तिके ॥ १० तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ॥ ११ भाववचनाश्च ॥ १२ अण्कर्मणि च ॥ १३ लृट् शेषे च ॥ १४ लृटः सद्वा ॥ १५ अनद्यतने लुट् ॥ १६ पदरुजविशस्पृशो घञ् ॥ १७ सृ स्थिरे ॥ १८ भावे ॥ १९ अकर्तरि च कारके संज्ञायाम् ॥ २० परिमाणाख्यायां सर्वेभ्यः ॥ १ ॥ २१ इङश्च ॥ २२ उपसर्गे रुवः ॥ २३ समि युद्रुदुवः ॥ २४ श्रिणीभुवोऽनुपसर्गे ॥ २५ वौ क्षुश्रुवः ॥ २६ अवोदोर्नियः ॥ २७ प्रे द्रुस्तुस्रुवः ॥ २८ निरभ्योः पूल्वोः ॥ २९ उन्न्योर्ग्रः ॥ ३० कॄ धान्ये ॥ ३१ यज्ञे समि स्तुवः ॥ ३२ प्रे स्त्रोऽयज्ञे ॥ ३३ प्रथने वावशब्दे ॥ ३४ छन्दोनाम्नि च ॥ ३५ उदि ग्रहः ॥ ३६ समि मुष्टौ ॥ ३७ परिन्योर्नीणोर्द्यूताभ्रेषयोः ॥ ३८ परावनुपात्यय इणः ॥ ३९ व्युपयोः शेते पर्याये ॥ ४० हस्तादाने चेरस्तेये ॥ २ ॥ ४१ निवासचितिशरीरोपसमाधानेष्वादेश्च कः ॥ ४२ संघे चानौत्तराधर्ये ॥ ४३ कर्मव्यतिहारे णच्स्त्रियाम् ॥ ४४ अभिविधौ भाव इनुण् ॥ ४५ आक्रोशेऽवन्योर्ग्रहः ॥ ४६ प्रे लिप्सायाम् ॥ ४७ परौ यज्ञे ॥ ४८ नौ वृ धान्ये ॥ ४९ उदि श्रयतियौतिपूद्रुवः ॥ ५० विभाषाऽऽङि रुप्लुवोः ॥ ५१ अवे ग्रहो वर्षप्रतिबन्धे ॥ ५२ प्रे वणिजाम् ॥ ५३ रश्मौ च ॥ ५४ वृणोतेराच्छादने ॥ ५५ परौ भुवोऽवज्ञाने ॥ ५६ एरच् ॥ ५७ ऋदोरप् ॥ ५८ ग्रहवृदृनिश्चिगमश्च ॥ ५९ उपसर्गेऽदः ॥ ६० नौ ण च ॥ ३ ॥ ६१ व्यधजपोरनुपसर्गे ॥ ॥ ६२ स्वनहसोर्वा ॥ ६३ यमः समुपनिविषु च ॥ ६४ नौ गदनदपठस्वनः ॥ ६५ क्वणो वीणायां च ॥ ६६ नित्यं पणः परिमाणे ॥ ६७ मदोनुपसर्गे ॥ ६८ प्रमदसंमदौ हर्षे ॥ ६९ समुदोरजः पशुषु ॥ ७० अक्षेषु ग्लहः ॥ ७१ प्रजने सर्तेः ॥ ७२ ह्वः संप्रसारणं च न्यभ्युपविषु ॥ ७३ आङि युद्धे ॥ ७४ निपानमाहावः ॥ ७५ भावेऽनुपसर्गस्य ॥ ७६ हनश्च वधः ॥ ७७ मूर्तौ घनः ॥ ७८ अन्तर्घनो देशे ॥ ७९ अगारैकदेशे प्रघणः प्रघाणश्च ॥ ८० उद्घनोऽत्याधानम् ॥ ४ ॥ ८१ अपघनोऽङ्गम् ॥ ८२ करणेऽयोविद्रुषु ॥ ८३ स्तम्बे क च ॥ ८४ परौ घः ॥ ८५ उपघ्न आश्रये ॥ ८६ संघोद्घौ गणप्रशंसयोः ॥ ८७ निघो निमित्तम् ॥ ८८ ड्वितः क्त्रिः ॥ ८९ ट्वितोऽथुच् ॥ ९० यजयाचयतविच्छप्रच्छरक्षो नङ् ॥ ९१ स्वपो नन् ॥ ९२ उपसर्गे घोः किः ॥ ९३ कर्मण्यधिकरणे च ॥ ९४ स्त्रियां क्तिन् ॥ ९५ स्थागापापचो भावे ॥ ९६ मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः ॥ ९७ ऊतियूतिजूतिसातिहेतिकीर्तयश्च ॥ ९८ व्रजयजोर्भावे क्यप् ॥ ९९ संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः ॥ १०० कृञः श च ॥ ५ ॥ १०१ इच्छा ॥ १०२ अ प्रत्ययात् ॥ १०३ गुरोश्च हलः ॥ १०४ षिद्भिदादिभ्योऽङ् ॥ १०५ चिन्ति-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पूजिकथिकुम्बिचर्चश्च ॥ १०६ आतश्चोपसर्गे ॥ १०७ ण्यासश्रन्थो युच् ॥ १०८ रोगाख्यायां ण्वुल्बहुलम् ॥ १०९ संज्ञायाम् ॥ ११० विभाषाख्यानपरिप्रश्नयोरिञ्च ॥ १११ पर्यायार्हर्णोत्पत्तिषु ण्वुच् ॥ ११२ आक्रोशे नञ्यनिः ॥ ११३ कृत्यल्युटो बहुलम् ॥ ११४ नपुंसके भावे क्तः ॥ ११५ ल्युट् च ॥ ११६ कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम् ॥ ११७ करणाधिकरणयोश्च ॥ ११८ पुंसि संज्ञायां घः प्रायेण ॥ ११९ गोचरसंचरवहव्रजव्यजापणनिगमाश्च ॥ १२० अवे तृस्त्रोर्घञ् ॥ ३ ॥ १२१ हलश्च ॥ १२२ अध्यायन्यायोद्यावसंहाराधारावायाश्च ॥ १२३ उदङ्कोऽनुदके ॥ १२४ जालमानायः ॥ १२५ खनो घ च ॥ १२६ ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥ १२७ कर्तृकर्मणोश्च भूकृञोः ॥ १२८ आतो युच् ॥ १२९ छन्दसि गत्यर्थेभ्यः ॥ १३० अन्येभ्योऽपि दृश्यते ॥ १३१ वर्तमानसामीप्ये वर्तमानवद्वा ॥ १३२ आशंसायां भूतवच्च ॥ १३३ क्षिप्रवचने लृट् ॥ १३४ आशंसावचने लिङ् ॥ १३५ नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः ॥ १३६ भविष्यति मर्यादावचनेऽवरस्मिन् ॥ १३७ कालविभागे चानहोरात्राणाम् ॥ १३८ परस्मिन्विभाषा । १३९ लिङ्निमित्ते लृङ् क्रियातिपत्तौ ॥ १४० भूते च ॥ ७ ॥ १४१ वोताप्योः ॥ १४२ गर्हायां लडपिजात्वोः ॥ १४३ विभाषा कथमि लिङ् च ॥ १४४ किंवृत्ते लिङ्लृटौ ॥ १४५ अनवक्लृप्त्यमर्षयोरकिंवृत्ते ॥ १४६ किंकिलास्त्यर्थेषु लृट् ॥ १४७ जातुयदोर्लिङ् ॥ १४८ यच्चयत्रयोः ॥ १४९ गर्हायां च ॥ १५० चित्रीकरणे च ॥ १५१ शेषे लृडयदौ ॥ १५२ उताप्योः समर्थयोर्लिङ् ॥ १५३ कामप्रवेदनेऽकच्चिति १५४ संभावनेऽलमिति चेत्सिद्धाप्रयोगे ॥ १५५ विभाषा धातौ संभावनवचनेऽयदि ॥ १५६ हेतुहेतुमतोर्लिङ् ॥ १५७ इच्छार्थेषु लिङ्लोटौ ॥ १५८ समानकर्तृकेषु तुमुन् ॥ १५९ लिङ् च ॥ १६० इच्छार्थेभ्यो विभाषा वर्तमाने ॥८॥ १६१ विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ॥ १६२ लोट् च ॥ १६३ प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ॥ १६४ लिङ् चोर्ध्वमौहूर्तिके ॥ १६५ स्मे लोट् ॥ १६६ अधीष्टे च ॥ १६७ कालसमयवेलासु तुमुन् ॥ १६८ लिङ् यदि ॥ १६९ अर्हे कृत्यतृचश्च ॥ १७० आवश्यकाधमर्ण्ययोर्णिनिः ॥ १७१ कृत्याश्च ॥ १७२ शकि लिङ् च ॥ १७३ आशिषि लिङ्लोटौ ॥ १७४ क्तिच्क्तौ च संज्ञायाम् ॥ १७५ माङि लुङ् ॥ १७६ स्मोत्तरे लङ् च ॥ "उणादय इङोनिवास व्यधजपोरपघन इच्छा हलश्च वोताप्योर्विधिषोडश" ॥

---

## चतुर्थः पादः ॥

१ धातुसंबन्धे प्रत्ययाः ॥ २ क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः ॥ ३ समुच्चयेऽन्यतरस्याम् ॥ ४ यथाविध्यनुप्रयोगः पूर्वस्मिन् ॥ ५ समुच्चये सामान्यवचनस्य ॥ ६ छन्दसि लुङ्लङ्लिटः ॥ ७ लिङर्थे लेट् ॥ ८ उपसंवादाशङ्कयोश्च ॥ ९ तुमर्थे

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सेसेनसेऽसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः ॥ १० प्रयै रोहिष्यै अव्यथिष्यै ॥ ११ दृशे विख्ये च ॥ १२ शकि णमुल्कमुलौ ॥ १३ ईश्वरे तोसुन्कसुनौ ॥ १४ कृत्यार्थे तवैकेन्केन्यत्वनः ॥ १५ अवचक्षे च ॥ १६ भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् ॥ १७ सृपितृदोः कसुन् ॥ १८ अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ॥ १९ उदीचां माङो व्यतीहारे ॥ २० परावरयोगे च ॥ १ ॥ २१ समानकर्तृकयोः पूर्वकाले ॥ २२ आभीक्ष्ण्ये णमुल् च ॥ २३ न यद्यनाकाङ्क्षे ॥२४ विभाषाग्रेप्रथमपूर्वेषु॥ २५ कर्मण्याक्रोशे कृञः खमुञ् ॥२६ स्वादुमि णमुल् ॥ २७ अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ॥ २८ यथातथयोरसूयाप्रतिवचने ॥ २९ कर्मणि दृशिविदोः साकल्ये ॥ ३० यावति विन्दजीवोः ॥ ३१ चर्मोदरयोः पूरेः ॥ ३२ वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् ॥ ३३ चेले क्नोपेः ॥ ३४ निमूलसमूलयोः कषः ॥ ३५ शुष्कचूर्णरूक्षेषु पिषः ॥ ३६ समूलाकृतजीवेषु हन्कृञ्ग्रहः ॥ ३७ करणे हनः ॥ ३८ स्नेहने पिषः ॥ ३९ हस्ते वर्तिग्रहोः ॥ ४० स्वे पुषः ॥ २ ॥ ४१ अधिकरणे बन्धः ॥ ४२ संज्ञायाम् ॥ ४३ कर्त्रोर्जीवपुरुषयोर्नशिवहोः ॥ ४४ ऊर्ध्वे शुषिपूरोः ॥ ४५ उपमाने कर्मणि च ॥ ४६ कषादिषु यथाविध्यनुप्रयोगः ॥ ४७ उपदंशस्तृतीयायाम् ॥ ४८ हिंसार्थानां च समानकर्मकाणाम् ॥ ४९ सप्तम्यां चोपपीडरुधकर्षः ॥ ५० समासत्तौ ॥ ५१ प्रमाणे च ॥ ५२ अपादाने परीप्सायाम् ॥ ५३ द्वितीयायां च ॥ ५४ स्वाङ्गेऽध्रुवे ॥ ५५ परिक्लिश्यमाने च ॥ ५६ विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ॥ ५७ अस्यतितृषोः क्रियान्तरे कालेषु ॥ ५८ नाम्न्यादिशिग्रहोः ॥ ५९ अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ ॥ ६० तिर्यच्यपवर्गे ॥ ३ ॥ ६१ स्वाङ्गे तस्प्रत्यये कृभ्वोः ॥ ६२ नाधार्थप्रत्यये च्व्यर्थे ॥ ६३ तूष्णीमि भुवः ॥ ६४ अन्वच्यानुलोम्ये ॥ ६५ शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ॥ ६६ पर्याप्तिवचनेष्वलमर्थेषु ॥ ६७ कर्तरि कृत् ॥ ६८ भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ॥ ६९ लः कर्मणि च भावे चाकर्मकेभ्यः ॥ ७० तयोरेव कृत्यक्तखलर्थाः ॥ ७१ आदिकर्मणि क्तः कर्तरि च ॥ ७२ गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ॥ ७३ दाशगोघ्नौ संप्रदाने ॥ ७४ भीमादयोऽपादाने ॥ ७५ ताभ्यामन्यत्रोणादयः ॥ ७६ क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ॥ ७७ लस्य ॥ ७८ तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् ॥ ७९ टित आत्मनेपादानां टेरे ॥ ८० थासः से ॥ ४ ॥ ८१ लिटस्तझयोरेशिरेच् ॥ ८२ परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ॥ ८३ विदो लटो वा ॥ ८४ ब्रुवः पञ्चानामादित आहो ब्रुवः ॥ ८५ लोटो लङ्वत् ॥ ८६ एरुः ॥ ८७ सेर्ह्यपिच्च ॥ ८८ वा छन्दसि ॥ ८९ मेर्निः ॥ ९० आमेतः ॥ ९१ सवाभ्यां वामौ ॥ ९२ आडुत्तमस्य पिच्च ॥ ९३ एत ऐ ॥ ९४ लेटोऽडाटौ ॥ ९५ आत ऐ ॥ ९६ वैतोऽन्यत्र ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

९७ इतश्च लोपः परस्मैपदेषु ॥ ९८ स उत्तमस्य ॥ ९९ नित्यं ङितः ॥१०० इतश्च॥५॥ १०१ तस्थस्थमिपां तान्तन्तामः ॥ १०२ लिङः सीयुट् ॥ १०३ यासुट्परस्मैपदेषूदात्तो ङिच्च ॥ १०४ किदाशिषि ॥ १०५ झस्य रन् ॥ १०६ इटोऽत् ॥ १०७ सुट् तिथोः ॥ १०८ झेर्जुस् ॥ १०९ सिजभ्यस्तविदिभ्यश्च ॥ ११० आतः ॥ १११ लङः शाकटायनस्यैव ॥ ११२ द्विषश्च ॥११३ तिङ्शित्सार्वधातुकम् ॥११४ आर्धधातुकं शेषः॥ ११५ लिट् च ॥ ११६ लिङाशिषि ॥ ११७ छन्दस्युभयथा ॥ "धातुसंबन्धे समानकर्तृकयोरधिकरणे स्वाङ्गे लिटस्तस्थस्थमिपां सप्तदश" ॥ इति तृतीयोऽध्यायः ॥

---

# चतुर्थोऽध्यायः ॥

## प्रथमः पादः ॥

१ ङ्याप्प्रातिपदिकात् ॥ २ स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् ॥ ३ स्त्रियाम् ॥ ४ अजाद्यतष्टाप् ॥ ५ ऋन्नेभ्यो ङीप् ॥ ६ उगितश्च ॥ ७ वनो र च ॥ ८ पादोऽन्यतरस्याम् ॥ ९ टाबृचि ॥१० न षट्स्वस्रादिभ्यः ॥११ मनः॥ १२ अनो बहुव्रीहेः ॥ १३ डाबुभाभ्यामन्यतरस्याम् ॥ १४ अनुपसर्जनात् ॥ १५ टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ॥ १६ यञश्च ॥ १७ प्राचां ष्फ तद्धितः ॥ १८ सर्वत्र लोहितादिकतन्तेभ्यः ॥ १९ कौरव्यमाण्डूकाभ्यां च ॥ २० वयसि प्रथमे ॥ १ ॥ २१ द्विगोः ॥ २२ अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि ॥ २३ काण्डान्तात्क्षेत्रे ॥ २४ पुरुषात्प्रमाणेऽन्यतरस्याम् ॥ २५ बहुव्रीहेरूधसो ङीष् ॥ २६ संख्याव्ययादेर्ङीप् ॥ २७ दामहायनान्ताच्च ॥ २८ अन उपाधालोपिनोन्यतरस्याम् ॥ २९ नित्यं संज्ञाछन्दसोः ॥ ३० केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च ॥ ३१ रात्रेश्चाजसौ ॥ ३२ अन्तर्वत्पतिवतोर्नुक् ॥ ३३ पत्युर्नो यज्ञसंयोगे ॥ ३४ ॥ विभाषा सपूर्वस्य ॥ ३५ नित्यं सपत्न्यादिषु ॥ ३६ पूतक्रतोरै च ॥ ३७ वृषाकप्यग्निकुसितकुसिदानामुदात्तः ॥ ३८ मनोरौ वा ॥ ३९ वर्णादनुदात्तात्तोपधात्तो नः ॥ ४० अन्यतो ङीष् ॥ २ ॥ ४१ षिद्गौरादिभ्यश्च ॥ ४२ जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु ॥ ४३ ॥ शोणात्प्राचाम् ॥ ४४ वोतो गुणवचनात् ॥ ४५ बह्वादिभ्यश्च ॥ ४६ नित्यं छन्दसि ॥ ४७ भुवश्च ॥ ४८ पुंयोगादाख्यायाम् ॥ ४९ इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ॥ ५० क्रीतात्करणपूर्वात् ॥ ५१ क्तादल्पाख्यायाम् ॥ ५२ बहुव्रीहेश्चान्तोदात्तात् ॥ ५३ अस्वाङ्गपूर्वपदाद्वा ॥ ५४ स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ॥ ५५ नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ॥ ५६ न क्रोडादिबह्वचः ॥ ५७ सहनञ्विद्यमानपूर्वाच्च ॥ ५८ नखमुखात्संज्ञायाम् ॥ ५९ दीर्घजीह्वी च च्छन्दसि ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

६० दिक्पूर्वपदान्ङीप् ॥ ३ ॥ ६१ वाहः ॥ ६२ सख्यशिश्वीति भाषायाम् ॥ ६३ जाते-रस्त्रीविषयादयोपधात् ॥ ६४ पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च ॥ ६५ इतो मनुष्य-जातेः ॥ ६६ ऊङुतः ॥ ६७ बाह्वन्तात्संज्ञायाम् ॥ ६८ पङ्गोश्च ॥ ६९ ऊरूत्तरपदा-दौपम्ये ॥ ७० संहितशफलक्षणवामादेश्च ॥ ७१ कद्रुकमण्डल्वोश्छन्दसि ॥ ७२ संज्ञा-याम् ॥ ७३ शार्ङ्गरवाद्यञो ङीन् ॥ ७४ यङश्चाप् ॥ ७५ आवट्याच्च ॥ ७६ तद्धिताः ॥ ७७ यूनस्तिः ॥ ७८ अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ्गोत्रे ॥ ७९ गोत्रावयवात् ॥ ८० क्रौड्यादिभ्यश्च ॥ ४ ॥ ८१ दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतर-स्याम् ॥ ८२ समर्थानां प्रथमाद्वा ॥ ८३ प्राग्दीव्यतोऽण् ॥ ८४ अश्वपत्यादिभ्यश्च ॥ ८५ दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ॥ ८६ उत्सादिभ्योऽञ् ॥ ८७ स्त्रीपुंसाभ्यां नञ्स्न-ञौ भवनात् ॥ ८८ द्विगोर्लुगनपत्ये ॥ ८९ गोत्रेऽलुगचि ॥ ९० यूनि लुक् ॥ ९१ फक्फि-ञोरन्यतरस्याम् ॥ ९२ तस्यापत्यम् ॥ ९३ एको गोत्रे ॥ ९४ गोत्राद्यून्यस्त्रियाम् ॥ ९५ अत इञ् ॥ ९६ बाह्वादिभ्यश्च ॥ ९७ सुधातुरकङ् च ॥ ९८ गोत्रे कुञ्जादिभ्य-श्च्फञ् ॥ ९९ नडादिभ्यः फक् ॥ १०० हरितादिभ्योऽञः ॥ ५ ॥ १०१ यञिञोश्च ॥ १०२ शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु ॥ १०३ द्रोणपर्वतजीवन्तादन्यतरस्याम् ॥ १०४ अनृष्यानन्तर्ये बिदादिभ्योऽञ् ॥ १०५ गर्गादिभ्यो यञ् ॥ १०६ मधुबभ्र्वोर्ब्रा-ह्मणकौशिकयोः ॥ १०७ कपिबोधादाङ्गिरसे ॥ १०८ वतण्डाच्च ॥ १०९ लुक्स्त्रियाम् ॥ ११० अश्वादिभ्यः फञ् ॥ १११ भर्गात्त्रैगर्ते ॥ ११२ शिवादिभ्योऽण् ॥ ११३ अवृ-द्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः ॥ ११४ ऋष्यन्धकवृष्णिकुरुभ्यश्च ॥ ११५ मातु-रुत्संख्यासंभद्रपूर्वायाः ॥ ११६ कन्यायाः कनीन च ॥ ११७ विकर्णशुङ्गच्छगलाद्वत्स-भरद्वाजात्रिषु ॥ ११८ पीलाया वा ॥ ११९ ढक्च मण्डूकात् ॥ १२० स्त्रीभ्यो ढक् ॥ ६ ॥ १२१ द्व्यचः ॥ १२२ इतश्चानिञः ॥ १२३ शुभ्रादिभ्यश्च ॥ १२४ विकर्ण-कुषीतकात्काश्यपे ॥ १२५ भ्रुवो वुक्च ॥ १२६ कल्याण्यादीनामिनङ् ॥ १२७ कुल-टाया वा ॥ १२८ चटकाया ऐरक् ॥ १२९ गोधाया ढ्रक् ॥ १३० आरगुदीचाम् ॥ १३१ क्षुद्राभ्यो वा ॥ १३२ पितृष्वसुश्छण् ॥ १३३ ढकि लोपः ॥ १३४ मातृ-ष्वसुश्च ॥ १३५ चतुष्पाद्भ्यो ढञ् ॥ १३६ गृष्ट्यादिभ्यश्च ॥ १३७ राजश्वशुराद्यत् ॥ १३८ क्षत्राद्घः ॥ १३९ कुलात्खः ॥ १४० अपूर्वपदादन्यतरस्यां यड्ढकञौ ॥ ७ ॥ १४१ महाकुलादञ्खञौ ॥ १४२ दुष्कुलाड्ढक् ॥ १४३ स्वसुश्छः ॥ १४४ भ्रातुर्व्यच्च ॥ १४५ व्यन्सपत्ने ॥ १४६ रेवत्यादिभ्यष्ठक् ॥ १४७ गोत्रस्त्रियाः कुत्सने ण च ॥ १४८ वृद्धाट्ठक्सौवीरेषु बहुलम् ॥ १४९ फेश्छ च ॥ १५० फाण्टाहृतिमिम-ताभ्यां णफिञौ ॥ १५१ कुर्वादिभ्यो ण्यः ॥ १५२ सेनान्तलक्षणकारिभ्यश्च ॥ १५३ उदीचामिञ् ॥ १५४ तिकादिभ्यः फिञ् ॥ १५५ कौशल्यकार्मार्याभ्यां



CC-0- Jangamwadi Math Collection. Digitized by eGangotri

च ॥ १९६ अणो द्व्यचः ॥ १९७ उदीचां वृद्धादगोत्रात् ॥ १९८ वाकिनादीनां कुक्च ॥ १९९ पुत्रान्तादन्यतरस्याम् ॥ १६० प्राचामवृद्धात्फिन्बहुलम् ॥ ८ ॥ १६१ मनोर्जातावञ्यतौ षुक्च ॥ १६२ अपत्यं पौत्रप्रभृति गोत्रम् ॥ १६३ जीवति तु वंश्ये युवा ॥ १६४ भ्रातरि च ज्यायसि ॥ १६५ वान्यस्मिन्सपिण्डे स्थविरतरे जीवति ॥ १६६ वृद्धस्य च पूजायाम् ॥ १६७ यूनश्च कुत्सायाम् ॥ १६८ जनपदशब्दात्क्षत्रियादञ् ॥ १६९ साल्वेयगान्धारिभ्यां च ॥ १७० द्व्यञ्मगधकलिङ्गसूरमसादण् ॥ १७१ वृद्धेत्कोसलाजादाञ्ञ्यङ् ॥ १७२ कुरुनादिभ्यो ण्यः ॥ १७३ साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ॥ १७४ ते तद्राजाः ॥ १७५ कम्बोजाल्लुक् ॥ १७६ स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ॥ १७७ अतश्च ॥ १७८ न प्राच्यभर्गादियौधेयादिभ्यः ॥ "ङ्याप्द्विगोः षिद्गौरादिवाहोदैवयज्ञियञ्ञोर्व्द्यचो महाकुलान्मनोर्जातावष्टादश" ॥

---

## द्वितीयः पादः ॥

१ तेन रक्तं रागात् ॥ २ लाक्षारोचनाशकलकर्दमाट्ठक् ॥ ३ नक्षत्रेण युक्तः कालः ॥ ४ लुबविशेषे ॥ ५ संज्ञायां श्रवणाश्वत्थाभ्याम् ॥ ६ द्वन्द्वाच्छः ॥ ७ दृष्टं साम ॥ ८ कलेर्ढक् ॥ ९ वामदेवाड्ड्यड्ड्यौ ॥ १० परिवृतो रथः ॥ ११ पाण्डुकम्बलादिनिः ॥ १२ द्वैपवैयाघ्रादञ् ॥ १३ कौमारापूर्ववचने ॥ १४ तत्रोद्धृतममत्रेभ्यः ॥ १५ स्थण्डिलाच्छयितरि व्रते ॥ १६ संस्कृतं भक्षाः ॥ १७ शूलोखाद्यत् ॥ १८ दध्नष्ठक् ॥ १९ उदश्वितोऽन्यतरस्याम् ॥ २० क्षीराड्ढञ् ॥ १ ॥ २१ सास्मिन्पौर्णमासीति संज्ञायाम् ॥ २२ आग्रहायण्यश्वत्थाट्ठक् ॥ २३ विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः ॥ २४ सास्य देवता ॥ २५ कस्येत् ॥ २६ शुक्राद्घन् २७ अपोनप्त्रपांनप्तृभ्यां घः ॥ २८ छ च ॥ २९ महेन्द्राद्घाणौ च ॥ ३० सोमाट्ट्यण् ॥ ३१ वाय्वृतुपित्रुषसो यत् ॥ ३२ द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च ॥ ३३ अग्नेर्ढक् ॥ ३४ कालेभ्यो भववत् ॥ ३५ महाराजप्रोष्ठपदाट्ठञ् ॥ ३६ पितृव्यमातुलमातामहपितामहाः ॥ ३७ तस्य समूहः ॥ ३८ भिक्षादिभ्योऽण् ॥ ३९ गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् ॥ ४० केदाराद्यञ्च ॥ २ ॥ ४१ ठञ्कवचिनश्च ॥ ४२ ब्राह्मणमाणववाडवाद्यत् ॥ ४३ ग्रामजनबन्धुसहायेभ्यस्तल् ॥ ४४ अनुदात्तादेरञ् ॥ ४५ खण्डिकादिभ्यश्च ॥ ४६ चरणेभ्यो धर्मवत् ॥ ४७ अचित्तहस्तिधेनोष्ठक् ॥ ४८ केशाश्वाभ्यां यञ्छावन्यतरस्याम् ॥ ४८ पाशादिभ्यो यः ॥ ५० खलगोरथात् ॥ ५१ इनित्रकट्यचश्च ॥ ५२ विषयो देशे ॥ ५३ राजन्यादिभ्यो वुञ् ॥ ५४ भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ ॥ ५५ सोऽस्यादिरिति छन्दसः प्रगाथेषु ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

५६ संग्रामे प्रयोजनयोद्धृभ्यः ॥ ५७ तदस्यां प्रहरणमिति क्रीडायां णः ॥ ५८ घञः
सास्यां क्रियेति ञः ॥ ५९ तदधीते तद्वेद ॥ ६० क्रतूक्थादिसूत्रान्ताट्ठक् ॥ ३ ॥
६१ क्रमादिभ्यो वुन् ॥ ६२ अनुब्राह्मणादिनिः ॥ ६३ वसन्तादिभ्यष्ठक् ॥ ६४ प्रो-
क्ताल्लुक् ॥ ६५ सूत्राच्च कोपधात् ॥ ६६ छन्दोब्राह्मणानि च तद्विषयाणि ॥ ६७ तद-
स्मिन्नस्तीति देशे तन्नाम्नि ॥ ६८ तेन निर्वृत्तम् ॥ ६९ तस्य निवासः ॥ ७० अदूरभ-
वश्च ॥ ७१ ओरञ् ॥ ७२ मतोश्च बह्वजङ्गात् ॥ ७३ बह्वचः कूपेषु ॥ ७४ उदक्च
विपाशः ॥ ७५ संकलादिभ्यश्च ॥ ७६ स्त्रीषु सौवीरसाल्वप्राक्षु ॥ ७७ सुवास्त्वादि-
भ्योऽण् ॥ ७८ रोणी ॥ ७९ कोपधाच्च ॥ ८० वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फि-
ञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्णसुतंगमप्रगदि-
न्वराहकुमुदादिभ्यः ॥ ४ ॥ ८१ जनपदे लुप् ॥ ८२ वरणादिभ्यश्च ॥ ८३ शर्क-
राया वा ॥ ८४ ठक्छौ च ॥ ८५ नद्यां मतुप् ॥ ८६ मध्वादिभ्यश्च ॥ ८७ कुमुद-
नडवेतसेभ्यो ड्मतुप् ॥ ८८ नडशादाड्ड्वलच् ॥ ८९ शिखाया वलच् ॥ ९० उत्करा-
दिभ्यश्छः ॥ ९१ नडादीनां कुक्च ॥ ९२ शेषे ॥ ९३ राष्ट्रावारपाराद्घखौ ॥
९४ ग्रामाद्यखञौ ॥ ९५ कत्र्यादिभ्यो ढकञ् ॥ ९६ कुलकुक्षिग्रीवाभ्यः श्वास्यलंका-
रेषु ॥ ९७ नद्यादिभ्यो ढक् ॥ ९८ दक्षिणापश्चात्पुरसस्त्यक् ॥ ९९ कापिश्याः ष्फक् ॥
१०० रङ्कोरमनुष्येऽण्च ॥ ५ ॥ १०१ द्युप्रागपागुदक्प्रतीचो यत् ॥ १०२ कन्थाया-
ष्ठक् ॥ १०३ वर्णौ वुक् ॥ १०४ अव्ययात्त्यप् ॥ १०५ ऐषमोह्यःश्वसोऽन्यतरस्याम् ॥
१०६ तीररूप्योत्तरपदादञ्ञौ ॥ १०७ दिक्पूर्वपदादसंज्ञायां ञः ॥ १०८ मद्रे-
भ्योऽञ् ॥ १०९ उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् ॥ ११० प्रस्थोत्तरपदपलद्यादि-
कोपधादण् ॥ १११ कण्वादिभ्यो गोत्रे ॥ ११२ इञश्च ॥ ११३ न द्व्यचः प्राच्यभ-
रतेषु ॥ ११४ वृद्धाच्छः ॥ ११५ भवतष्ठक्छसौ ॥ ११६ काश्यादिभ्यष्ठञ्ञिठौ ॥
११७ वाहीकग्रामेभ्यश्च ॥ ११८ विभाषोशीनरेषु ॥ ११९ ओर्देशे ठञ् ॥ १२० वृ-
द्धात्प्राचाम् ॥ ६ ॥ १२१ धन्वयोपधाद्वुञ् ॥ १२२ प्रस्थपुरवहान्ताच्च ॥ १२३ रो-
पधेतोः प्राचाम् ॥ १२४ जनपदतदवध्योश्च ॥ १२५ अवृद्धादपि बहुवचनविषयात् ॥
१२६ कच्छाग्निवक्त्रवर्तोत्तरपदात् ॥ १२७ धूमादिभ्यश्च ॥ १२८ नगरात्कुत्सनप्रावी-
ण्ययोः ॥ १२९ अरण्यान्मनुष्ये ॥ १३० विभाषा कुरुयुगंधराभ्याम् ॥ १३१ मद्र-
वृज्योः कन् ॥ १३२ ॥ कोपधादण् ॥ १३३ कच्छादिभ्यश्च ॥ १३४ मनुष्यतत्स्थयो-
र्वुञ् ॥ १३५ अपदातौ साल्वात् ॥ १३६ गोयवाग्वोश्च ॥ १३७ गर्तोत्तरपदाच्छः ॥
१३८ गहादिभ्यश्च ॥ १३९ प्राचां कटादेः ॥ १४० राज्ञः क च ॥ ७ ॥ १४१ वृ-
द्धादकेकान्तखोपधात् ॥ १४२ कन्थापलदनगरग्रामह्रदोत्तरपदात् ॥ १४३ पर्वताच्च ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

१४४ विभाषामनुष्ये ॥ १४५ कुकणपर्णाद्भारद्वाजे ॥ "तेनसासिन्ठञ्क्रमादिभ्योजनपदेद्युप्रागपाग्धन्ववृद्धात्पञ्च ॥"

---

## तृतीयः पादः ।

१ युष्मदस्मदोरन्यतरस्यां खञ्च ॥ २ तस्मिन्नणि च युष्माकास्माकौ ॥ ३ तवकममकावेकवचने ॥ ४ अर्धाद्यत् ॥ ५ परावराधमोत्तमपूर्वाच्च ॥ ६ दिक्पूर्वपदाट्ठञ्च ॥ ७ ग्रामजनपदैकदेशादञ्ठञौ ॥ ८ मध्यान्मः ॥ ९ अ सांप्रतिके ॥ १० द्वीपादनुसमुद्रं यञ् । ११ कालाट्ठञ् ॥ १२ श्राद्धे शरदः ॥ १३ विभाषा रोगातपयोः ॥ १४ निशाप्रदोषाभ्यां च ॥ १५ श्वसस्तुट् च ॥ १६ संधिवेलाद्यृतुनक्षत्रेभ्योऽण् ॥ १७ प्रावृष एण्यः । १८ वर्षाभ्यष्ठक् ॥ १९ छन्दसि ठञ् ॥ २० वसन्ताच्च ॥ १ ॥ २१ हेमन्ताच्च ॥ २२ सर्वत्राण्च तलोपश्च ॥ २३ सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ॥ २४ विभाषा पूर्वाह्णापराह्णाभ्याम् ॥ २५ तत्र जातः ॥ २६ प्रावृषष्ठप् ॥ २७ संज्ञायां शरदो वुञ् ॥ २८ पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन् ॥ २९ पथः पन्थ च ॥ ३० अमावास्याया वा ॥ ३१ अ च ॥ ३२ सिन्ध्वपकराभ्यां कन् ॥ ३३ अणञौ च ॥ ३४ श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक् ॥ ३५ स्थानान्तगोशालखरशालाच्च ॥ ३६ वत्सशालाभिजिदश्वयुक्शतभिषजो वा ॥ ३७ ॥ नक्षत्रेभ्यो बहुलम् ॥ ३८ कृतलब्धक्रीतकुशलाः ॥ ३९ प्रायभवः ॥ ४० उपजानूपकर्णोपनीवेष्ठक् ॥ २ ॥ ४१ संभूते ॥ ४२ कोशाड्ढञ् ॥ ४३ कालात्साधुपुष्प्यत्पच्यमानेषु ॥ ४४ उप्ते च ॥ ४५ आश्वयुज्या वुञ् ॥ ४६ ग्रीष्मवसन्तादन्यतरस्याम् ॥ ४७ देयमृणे ॥ ४८ कलाप्यश्वत्थयवबुसाद्वुन् ॥ ४९ ग्रीष्मावरसमाद्वुञ् ॥ ५० संवत्सराग्रहायणीभ्यां ठञ्च ॥ ५१ व्याहरति मृगः ॥ ५२ तदस्य सोढम् ॥ ५३ तत्र भवः ॥ ५४ दिगादिभ्यो यत् ॥ ५५ शरीरावयवाच्च ॥ ५६ दृतिकुक्षिकलशिवस्त्यहेर्ढञ् ॥ ५७ ग्रीवाभ्योऽण्च ॥ ५८ गम्भीराञ्ञ्यः ५९ अव्ययीभावाच्च ॥ ६० अन्तःपूर्वपदाट्ठञ् ॥ ३ ॥ ६१ ग्रामात्पर्यनुपूर्वात् ॥ ६२ जिह्वामूलाङ्गुलेश्छः ॥ ६३ वर्गान्ताच्च ॥ ६४ अशब्दे यत्खावन्यतरस्याम् ॥ ६५ कर्णललाटात्कनलंकारे ॥ ६६ तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ॥ ६७ बह्वचोऽन्तोदात्ताट्ठञ् ॥ ६८ क्रतुयज्ञेभ्यश्च ॥ ६९ अध्यायेष्वेवर्षेः ॥ ७० पौरोडाशपुरोडाशात्ष्ठन् ॥ ७१ छन्दसो यदणौ ॥ ७२ द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् ॥ ७३ अणृगयनादिभ्यः ॥ ७४ तत आगतः ॥ ७५ ठगायस्थानेभ्यः ॥ ७६ शुण्डिकादिभ्योऽण् ॥ ७७ विद्यायोनिसंबन्धेभ्यो वुञ् ॥ ७८ ऋतष्ठञ् ॥ ७९ पितुर्यच्च ॥ ८० गोत्रादङ्कवत् ॥ ४ ॥ ८१ हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ॥ ८२ मयट् च ॥ ८३ प्रभवति ॥ ८४ विदूराञ्ञ्यः ॥ ८५ तद्गच्छति पथिदूतयोः ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

१८ अभिनिष्क्रामति द्वारम् ॥ ८७ अधिकृत्य कृते ग्रन्थे ॥ ८८ शिशुक्रन्दयमसभद्वन्द्वे-
न्द्रजननादिभ्यश्छः ॥ ८९ सोऽस्य निवासः ॥ ९० अभिजनश्च ॥ ९१ आयुधजीविभ्यश्छः
पर्वते ॥ ९२ शण्डिकादिभ्योः ञ्यः ॥ ९३ सिन्धुतक्षशिलादिभ्योऽणञौ ॥ ९४ तूदी-
शलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः ॥ ९५ भक्तिः ॥ ९६ अचित्താददेशकालाट्ठक् ॥
९७ महाराजाट्ठञ् ॥ ९८ वासुदेवार्जुनाभ्यां वुन् ॥ ९९ गोत्रक्षत्रियाख्येभ्यो बहुलं
वुञ् ॥ १०० जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने ॥ ५ ॥
१०१ तेन प्रोक्तम् ॥ १०२ तित्तिरिवरतन्तुखण्डिकोखाच्छण् ॥ १०३ काश्यपकौशि-
काभ्यामृषिभ्यां णिनिः ॥ १०४ कलापिवैशम्पायनान्तेवासिभ्यश्च ॥ १०५ पुराणप्रो-
क्तेषु ब्राह्मणकल्पेषु ॥ १०६ शौनकादिभ्यश्छन्दसि ॥ १०७ कठचरकाल्लुक् ॥ १०८ क-
लापिनोऽण् ॥ १०९ छगलिनो ढिनुक् ॥ ११० पाराशर्यशिलालिभ्यां भिक्षुन-
टसूत्रयोः ॥ १११ कर्मन्दकृशाश्वादिनिः ॥ ११२ तेनैकदिक् ॥ ११३ तसिश्च ॥
११४ उरसो यच्च ॥ ११५ उपज्ञाते ॥ ११६ कृते ग्रन्थे ॥ ११७ संज्ञायाम् ॥
११८ कुलालादिभ्यो वुञ् ॥ ११९ क्षुद्राभ्रमरवटरपादपादञ् ॥ १२० तस्येदम् ॥ ६ ॥
१२१ रथाद्यत् ॥ १२२ पत्रपूर्वादञ् ॥ १२३ पत्राध्वर्युपरिषदश्च ॥ १२४ हलसीरा-
ट्ठक् ॥ १२५ द्वन्द्वाद्वुन्वैरमैथुनिकयोः ॥ १२६ गोत्रचरणाद्वुञ् ॥ १२७ सङ्घाङ्कलक्ष-
णेष्वञ्यञिञामण् ॥ १२८ शाकलाद्वा ॥ १२९ छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः ॥
१३० न दण्डमाणवान्तेवासिषु ॥ १३१ रेवतिकादिभ्यश्छः ॥ १३२ कौपिञ्जलहास्ति-
पदादण् ॥ १३३ आथर्वणिकस्येकलोपश्च ॥ १३४ तस्य विकारः ॥ १३५ अवयवे च
प्राण्यौषधिवृक्षेभ्यः ॥ १३६ बिल्वादिभ्योऽण् ॥ १३७ कोपधाच्च ॥ १३८ त्रपुजतुनोः
षुक् ॥ १३९ ओरञ् ॥ १४० अनुदात्तादेश्च ॥ ७ ॥ १४१ पलाशादिभ्यो वा ॥
१४२ शम्याः ष्लञ् ॥ १४३ मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ॥ १४४ नित्यं
वृद्धशरादिभ्यः ॥ १४५ गोश्च पुरीषे ॥ १४६ पिष्टाच्च ॥ १४७ संज्ञायां कन् ॥
१४८ व्रीहेः पुरोडाशे ॥ १४९ असंज्ञायां तिलयवाभ्याम् ॥ १५० द्व्यचश्छन्दसि ॥
१५१ नोत्वद्वर्ध्रबिल्वात् ॥ १५२ तालादिभ्योऽण् ॥ १५३ जातरूपेभ्यः परिमाणे ॥
१५४ प्राणिरजतादिभ्योऽञ् ॥ १५५ ञितश्च तत्प्रत्ययात् ॥ १५६ क्रीतवत्परिमाणात् ॥
१५७ उष्ट्राद्वुञ् ॥ १५८ उमोर्णयोर्वा ॥ १५९ एण्या ढञ् ॥ १६० गोपयसोर्यत् ॥ ८ ॥
१६१ द्रोश्च ॥ १६२ माने वयः ॥ १६३ फले लुक् ॥ १६४ प्लक्षादिभ्योऽण् ॥
१६५ जम्ब्वा वा ॥ १६६ लुप् च ॥ १६७ ॥ हरीतक्यादिभ्यश्च ॥ १६८ कंसीयप-
रशव्ययोर्यञञौ लुक्च ॥ "युष्मद्धेमन्तात्संग्रामाद्धेतुतेनरथात्पलाशादिभ्योद्रोश्चाष्टौ" ॥

---

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

## चतुर्थ पादः ।

१ प्राग्वहतेष्ठक् ॥ २ तेन दीव्यति खनति जयति जितम् ॥ ३ संस्कृतम् ॥ ४ कुलत्थकोपधादण् ॥ ५ तरति ॥ ६ गोपुच्छाट्ठञ् ॥ ७ नौद्व्यचष्ठन् ॥ ८ चरति ॥ ९ आकर्षात्ष्ठल् ॥ १० पर्पादिभ्यः ष्ठन् ॥ ११ श्वगणाट्ठञ्च ॥ १२ वेतनादिभ्यो जीवति ॥ १३ वस्नक्रयविक्रयाट्ठन् ॥ १४ आयुधाच्छ च ॥ १५ हरत्युत्सङ्गादिभ्यः ॥ १६ भस्त्रादिभ्यः ष्ठन् ॥ १७ विभाषा विवधात् ॥ १८ अण्कुटिलिकायाः ॥ १९ निर्वृत्तेऽक्षद्यूतादिभ्यः ॥ २० त्रेर्मम्नित्यम् ॥ १ ॥ २१ अपमित्ययाचिताभ्यां कक्कनौ ॥ २२ संसृष्टे ॥ २३ चूर्णादिनिः ॥ २४ लवणाल्लुक् ॥ २५ मुद्गादण् ॥ २६ व्यञ्जनैरुपसिक्ते ॥ २७ ओजःसहोम्भसा वर्तते ॥ २८ तत्प्रत्यनुपूर्वमीपलोमकूलम् ॥ २९ परिमुखं च ॥ ३० प्रयच्छति गर्ह्यम् ॥ ३१ कुसीददशैकादशात्ष्ठन्ष्ठचौ ॥ ३२ उञ्छति ॥ ३३ रक्षति ॥ ३४ शब्ददर्दुरं करोति ॥ ३५ पक्षिमत्स्यमृगान्हन्ति ॥ ३६ परिपन्थं च तिष्ठति ॥ ३७ माथोत्तरपदपदव्यनुपदं धावति ॥ ३८ आक्रन्दाट्ठञ्च ॥ ३९ पदोत्तरपदं गृह्णाति ॥ ४० प्रतिकण्ठार्थललामं च ॥ २ ॥ ४१ धर्मं चरति ॥ ४२ प्रतिपथमेति ठंश्च ॥ ४३ समवायान्समवैति ॥ ४४ परिषदो ण्यः ॥ ४५ सेनाया वा ॥ ४६ संज्ञायां ललाटकुक्कुट्यौ पश्यति ॥ ४७ तस्य धर्म्यम् ॥ ४८ अण्महिष्यादिभ्यः ॥ ४९ ऋतोऽञ् ॥ ५० अवक्रयः ॥ ५१ तदस्य पण्यम् ॥ ५२ लवणाट्ठञ् ॥ ५३ किसरादिभ्यः ष्ठन् ॥ ५४ शलालुनोऽन्यतरस्याम् ॥ ५५ शिल्पम् ॥ ५६ मड्डुकझर्झरादणन्यतरस्याम् ॥ ५७ प्रहरणम् ॥ ५८ परश्वधाट्ठञ्च ॥ ५९ शक्तियष्ट्योरीकक् ॥ ६० अस्तिनास्तिदिष्टं मतिः ॥ ३ ॥ ६१ शीलम् ॥ ६२ छत्रादिभ्यो णः ॥ ६३ कर्माध्ययने वृत्तम् ॥ ६४ बह्वच्पूर्वपदाट्ठच् ॥ ६५ हितं भक्षाः ॥ ६६ तदस्मै दीयते नियुक्तम् ॥ ६७ श्राणामांसौदनाट्टिठन् ॥ ६८ भक्तादणन्यतरस्याम् ॥ ६९ तत्र नियुक्तः ॥ ७० अगारान्ताट्ठन् ॥ ७१ अध्यायिन्यदेशकालात् ॥ ७२ कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति ॥ ७३ निकटे वसति ॥ ७४ आवसथात्ष्ठल् ॥ ७५ प्राग्घिताद्यत् ॥ ७६ तद्वहति रथयुगप्रासङ्गम् ॥ ७७ धुरो यड्ढकौ ॥ ७८ खः सर्वधुरात् ॥ ७९ एकधुराल्लुक्च ॥ ८० शकटादण् ॥ ४ ॥ ८१ हलसीराट्ठक् ॥ ८२ संज्ञायां जन्या ॥ ८३ विध्यत्यधनुषा ॥ ८४ धनगणं लब्धा ॥ ८५ अन्नाण्णः ॥ ८६ वशं गतः ॥ ८७ पदमस्मिन्दृश्यम् ॥ ८८ मूलमस्याबर्हि ॥ ८९ संज्ञायां धेनुष्या ॥ ९० गृहपतिना संयुक्ते ञ्यः ॥ ९१ नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु ॥ ९२ धर्मपथ्यर्थन्यायादनपेते ॥ ९३ छन्दसो निर्मिते ॥ ९४ उरसोऽण्च ॥ ९५ हृदयस्य प्रियः ॥ ९६ बन्धने चर्षौ ॥ ९७ मतजनहलात्करणजल्पकर्षेषु ॥ ९८ तत्र साधुः ॥ ९९ प्रतिजनादिभ्यः खञ् ॥ १०० भक्ताण्णः ॥ ५ ॥ १०१ परिषदो ण्यः १०२ क-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

थादिभ्यष्ठक् ॥ १०३ गुडादिभ्यष्ठञ् ॥ १०४ पथ्यतिथिवसतिस्वपतेर्ढञ् ॥ १०५ सभाया यः ॥ १०६ ढश्छन्दसि ॥ १०७ समानतीर्थेवासी ॥ १०८ समानोदरे शयित ओ चोदात्तः ॥ १०९ सोदराद्यः ॥ ११० भवे छन्दसि ॥ १११ पाथोनदीभ्यां ड्यण् ॥ ११२ वेशन्तहिमवद्भ्यामण् ॥ ११३ स्रोतसो विभाषा ड्यड्ड्यौ ॥ ११४ सगर्भसयूथसनुताद्यन् ॥ ११५ तुग्राद्धन् ॥ ११६ अग्राद्यत् ॥ ११७ घच्छौ च ॥ ११८ समुद्राभ्राद्धः ॥ ११९ बर्हिषि दत्तम् ॥ १२० दूतस्य भागकर्मणि ॥ ६ ॥ १२१ रक्षोयातूनां हननी ॥ १२२ रेवतीजगतीहविष्याभ्यः प्रशस्ये ॥ १२३ असुरस्य स्वम् ॥ १२४ मायायामण् ॥ १२५ तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक्च मतोः ॥ १२६ अश्विमानण् ॥ १२७ वयस्यासु मूर्ध्नो मतुप् ॥ १२८ मत्वर्थे मासतन्वोः ॥ १२९ मधोर्ञ च ॥ १३० ओजसोऽहनि यत्खौ ॥ १३१ वेशोयशआदेर्भगाद्यल् ॥ १३२ ख च ॥ १३३ पूर्वैः कृतमिनयौ च ॥ १३४ अद्भिः संस्कृतम् ॥ १३५ सहस्रेण संमितौ घः ॥ १३६ मतौ च ॥ १३७ सोममर्हति यः ॥ १३८ मये च ॥ १३९ मधोः ॥ १४० वसोः समूहे च ॥ ७ ॥ १४१ नक्षत्राद्धः ॥ १४२ ॥ सर्वदेवात्तातिल् ॥ १४३ शिवशमरिष्टस्य करे ॥ १४४ भावे च ॥ "प्राग्वहतेरपमित्यधर्मशीलंहलपरिषदोरक्षोनक्षत्राच्चत्वारि" ॥ इतिचतुर्थोऽध्यायः ॥

---

# पञ्चमोऽध्यायः ।

## प्रथमः पादः ॥

१ प्राक् क्रीताच्छः ॥ २ उगवादिभ्यो यत् ॥ ३ कम्बलाच्च संज्ञायाम् ॥ ४ विभाषा हविरपूपादिभ्यः ॥ ५ तस्मै हितम् ॥ ६ शरीरावयवाद्यत् ॥ ७ खलयवमाषतिलवृषब्रह्मणश्च ॥ ८ अजाविभ्यां थ्यन् ॥ ९ आत्मन्विश्वजनभोगोत्तरपदात्खः ॥ १० सर्वपुरुषाभ्यां णढञौ ॥ ११ माणवचरकाभ्यां खञ् ॥ १२ तदर्थं विकृतेः प्रकृतौ ॥ १३ छदिरुपधिबलेर्ढञ् ॥ १४ ऋषभोपानहोर्ञ्यः ॥ १५ चर्मणोऽञ् ॥ १६ तदस्य तस्मिन्स्यादिति ॥ १७ परिखाया ढञ् ॥ १८ प्राग्वतेष्ठञ् ॥ १९ आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् ॥ २० असमासे निष्कादिभ्यः ॥ १ ॥ २१ शताच्च ठन्यतावशते ॥ २२ संख्याया अतिशदन्तायाः कन् ॥ २३ वतोरिड्वा ॥ २४ विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायाम् ॥ २५ कंसाट्टिठन् ॥ २६ शूर्पादञन्यतरस्याम् ॥ २७ शतमानविंशतिकसहस्रवसनादण् ॥ २८ अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम् ॥ २९ विभाषा कार्षापणसहस्राभ्याम् ॥ ३० द्वित्रिपूर्वान्निष्कात् ॥ ३१ बिस्ताच्च ॥ ३२ विंशतिकात्खः ॥ ३३ खार्या ईकन् ॥ ३४ पणपादमाषशताद्यत् ॥ ३५ शाणाद्वा ॥ ३६ द्वित्रिपूर्वादण्च ॥ ३७ तेन क्रीतम् ॥ ३८ तस्य निमित्तं संयोगोत्पातौ ॥ ३९ गोद्व्यचोऽसंख्यापरिमाणा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

श्वादेर्यत् ॥ ४० पुत्राच्छ च ॥ २ ॥ ४१ सर्वभूमिपृथिवीभ्यामणञौ ॥ ४२ तस्येश्वरः ॥ ४३ तत्र विदित इति च ॥ ४४ लोकसर्वलोकाट्ठञ् ॥ ४५ तस्य वापः ॥ ४६ पात्रात्ष्ठन् ॥ ४७ तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते ॥ ४८ पूरणार्धाट्ठन् ॥ ४९ भागाद्यच्च ॥ ५० तद्धरति वहत्यावहति भाराद्वंशादिभ्यः ॥ ५१ वस्नद्रव्याभ्यां ठन्कनौ ॥ ५२ संभवत्यवहरति पचति ॥ ५३ आढकाचितपात्रात्खोऽन्यतरस्याम् ॥ ५४ द्विगोः ष्ठंश्च ॥ ५५ कुलिजाल्लुक्खौ च ॥ ५६ सोऽस्यांशवस्नभृतयः ॥ ५७ तदस्य परिमाणम् ॥ ५८ संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु ॥ ५९ पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् ॥ ६० पञ्चद्दशतौ वर्गे वा ॥ ३ ॥ ६१ सप्तनोऽञ्छन्दसि ॥ ६२ त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण् ॥ ६३ तदर्हति ॥ ६४ छेदादिभ्यो नित्यम् ॥ ६५ शीर्षच्छेदाद्यच्च ॥ ६६ दण्डादिभ्यो यः ॥ ६७ छन्दसि च ॥ ६८ पात्राद्घंश्च ॥ ६९ कडंकरदक्षिणाच्छ च ॥ ७० स्थालीबिलात् ॥ ७१ यज्ञर्त्विग्भ्यां घखञौ ॥ ७२ पारायणतुरायणचान्द्रायणं वर्तयति ॥ ७३ संशयमापन्नः ॥ ७४ योजनं गच्छति ॥ ७५ पथः ष्कन् ॥ ७६ पन्थो ण नित्यम् ॥ ७७ उत्तरपथेनाहृतं च ॥ ७८ कालात् ॥ ७९ तेन निर्वृत्तम् ॥ ८० तमधीष्टो भृतो भूतो भावी ॥ ४ ॥ ८१ मासाद्वयसि यत्खञौ ॥ ८२ द्विगोर्यप् ॥ ८३ षण्मासाण्ण्यच्च ॥ ८४ अवयसि ठंश्च ॥ ८५ समायाः खः ॥ ८६ द्विगोर्वा ॥ ८७ रात्र्यहःसंवत्सराच्च ॥ ८८ वर्षाल्लुक्च ॥ ८९ चित्तवति नित्यम् ॥ ९० षष्टिकाः षष्टिरात्रेण पच्यन्ते ॥ ९१ वत्सरान्ताच्छश्छन्दसि ॥ ९२ संपरिपूर्वात्ख च ॥ ९३ तेन परिजय्यलभ्यकार्यसुकरम् ॥ ९४ तदस्य ब्रह्मचर्यम् ॥ ९५ तस्य च दक्षिणा यज्ञाख्येभ्यः ॥ ९६ तत्र च दीयते कार्यं भववत् ॥ ९७ व्युष्टादिभ्योऽण् ॥ ९८ तेन यथाकथाचहस्ताभ्यां णयतौ ॥ ९९ संपादिनि ॥ १०० कर्मवेषाद्यत् ॥ ५ ॥ १०१ तस्मै प्रभवति संतापादिभ्यः ॥ १०२ योगाद्यच्च ॥ १०३ कर्मण उकञ् ॥ १०४ समयस्तदस्य प्राप्तम् ॥ १०५ ऋतोरण् १०६ छन्दसि घस् ॥ १०७ कालाद्यत् ॥ १०८ प्रकृष्टे ठञ् ॥ १०९ प्रयोजनम् ॥ ११० विशाखाषाढादण्मन्थदण्डयोः ॥ १११ अनुप्रवचनादिभ्यश्छः ॥ ११२ समापनात्सपूर्वपदात् ॥ ११३ ऐकागारिकट् चौरे ॥ ११४ आलालिकडाद्यन्तवचने ॥ ११५ तेन तुल्यं क्रिया चेद्वतिः ॥ ११६ तत्र तस्यैव ॥ ११७ तदर्हम् ॥ ११८ उपसर्गाच्छन्दसि धात्वर्थे ॥ ११९ तस्य भावस्त्वतलौ ॥ १२० आ च त्वात् ॥ ६ ॥ १२१ न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवटयुधकतरसलसेभ्यः ॥ १२२ पृथ्वादिभ्य इमनिज्वा ॥ १२३ वर्णदृढादिभ्यः ष्यञ्च ॥ १२४ गुणवचनब्राह्मणादिभ्यः कर्मणि च ॥ १२५ स्तेनाद्यन्नलोपश्च ॥ १२६ सख्युर्यः ॥ १२७ कपिज्ञात्योर्ढक् ॥ १२८ पत्यन्तपुरोहितादिभ्यो यक् ॥ १२९ प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ॥ १३० हायनान्तयुवादिभ्योऽण् ॥ १३१ इगन्ताच्च लघुपूर्वात् ॥ १३२ योप-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

धाद्बुरूपोत्तमाद्बुञ् ॥ १३३ द्वन्द्वमनोज्ञादिभ्यश्च ॥ १३४ गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु ॥ १३५ होत्राभ्यश्छः ॥ १३६ ब्रह्मणस्त्वः ॥ "प्राक्क्रीताच्छताच्चसर्वभूमिसप्तनोऽमासात्तसैप्रभवति ननञ्पूर्वात्षोडश" ॥

---

## द्वितीयः पादः ॥

१ धान्यानां भवने क्षेत्रे खञ् ॥ २ व्रीहिशाल्योर्ढक् ॥ ३ यवयवकषष्टिकाद्यत् ॥ ४ विभाषा तिलमाषोमाभङ्गाणुभ्यः ॥ ५ सर्वचर्मणः कृतः खखञौ ॥ ६ यथामुखसंमुखस्य दर्शनः खः ॥ ७ तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ॥ ८ आप्रपदं प्राप्नोति ॥ ९ अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु ॥ १० परोवरपरंपरपुत्रपौत्रमनुभवति ॥ ११ अवारपारात्यन्तानुकामंगामी ॥ १२ समांसमां विजायते ॥ १३ अद्यश्वीनावष्टब्धे ॥ १४ आगवीनः ॥ १५ अनुग्वलंगामी ॥ १६ अध्वनो यत्खौ ॥ १७ अभ्यमित्राच्छ च ॥ १८ गोष्ठात्खञ्भूतपूर्वे ॥ १९ अश्वस्यैकाहगमः ॥ २० शालीनकौपीने अधृष्टाकार्ययोः ॥ १ ॥ २१ व्रातेन जीवति ॥ २२ साप्तपदीनं सख्यम् ॥ २३ हैयंगवीनं संज्ञायाम् ॥ २४ तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ ॥ २५ पक्षात्तिः ॥ २६ तेन वित्तश्चुञ्चुप्चणपौ ॥ २७ विनञ्भ्यां नानाञौ न सह ॥ २८ वेः शालच्छङ्कटचौ ॥ २९ संप्रोदश्च कटच् ॥ ३० अवात्कुटारच्च ॥ ३१ नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः ॥ ३२ नेर्बिडज्बिरीसचौ ॥ ३३ इनच्पिटच्चिकचि च ॥ ३४ उपाधिभ्यां त्यकन्नासन्नारूढयोः ॥ ३५ कर्मणि घटोऽठच् ॥ ३६ तदस्य संजातं तारकादिभ्य इतच् ३७ प्रमाणे द्वयसज्दघ्नञ्मात्रचः ॥ ३८ पुरुषहस्तिभ्यामण्च ॥ ३९ यत्तदेतेभ्यः परिमाणे वतुप् ॥ ४० किमिदम्भ्यां वो घः ॥ २॥४१ ॥ किमः संख्यापरिमाणे डति च ॥ ४२ संख्याया अवयवे तयप् ॥ ४३ द्वित्रिभ्यां तयस्यायज्वा ॥ ४४ उभादुदात्तो नित्यम् ॥ ४५ तदस्मिन्नधिकमिति दशान्ताड्डः ॥ ४६ शदन्तविंशतेश्च ॥ ४७ संख्याया गुणस्य निमाने मयट् ॥ ४८ तस्य पूरणे डट् ॥ ४९ नान्तादसंख्यादेर्मट् ॥ ५० थट् च छन्दसि ॥ ५१ षट्कतिकतिपयचतुरां थुक् ॥ ५२ बहुपूगगणसङ्घस्य तिथुक् ॥ ५३ वतोरिथुक् ॥ ५४ ॥ द्वेस्तीयः ॥ त्रेः संप्रसारणं च ॥ ५६ विंशत्यादिभ्यस्तमडन्यतरस्याम् ॥ ५७ नित्यं शतादिमासार्धमाससंवत्सराच्च ॥ ५८ षष्ठ्यादेश्चासंख्यादेः ॥ ५९ मतौ छः सूक्तसाम्नोः ॥ ६० अध्यायानुवाकयोर्लुक् ॥ ३ ॥ ६१ विमुक्तादिभ्योऽण् ॥ ६२ गोषदादिभ्यो वुन् ॥ ६३ तत्र कुशलः पथः ॥ ६४ आकर्षादिभ्यः कन् ॥ ६५ धनहिरण्यात्कामे ॥ ६६ स्वाङ्गेभ्यः प्रसिते ॥ ६७ उदराट्ठगाद्यूने ॥ ६८ सस्येन परिजातः ॥ ६९ अंशं हारी ॥ ७० तन्त्रादचिरापहृते ॥ ७१ ब्राह्मणकोष्णिके संज्ञायाम् ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

७२ शीतोष्णाभ्यां कारिणि ॥ ७३ अधिकम् ॥ ७४ अनुकाभिकाभीकः कमिता ॥ ७५ पार्श्वेनान्विच्छति ॥ ७६ अयःशूलदण्डाजिनाभ्यां ठक्ठञौ ॥ ७७ तावतिथं ग्रहणमिति लुग्वा ॥ ७८ स एषां ग्रामणीः ॥ ७९ शृङ्खलमस्य बन्धनं करभे ॥ ८० उत्क उन्मनाः ॥ ४ ॥ ८१ कालप्रयोजनाद्रोगे ॥ ८२ तदस्मिन्नन्नं प्रायेण संज्ञायाम् ॥ ८३ कुल्माषादञ् ॥ ८४ श्रोत्रियंश्छन्दोऽधीते ॥ ८५ श्राद्धमनेन भुक्तमिनिठनौ ॥ ८६ पूर्वादिनिः ॥ ८७ सपूर्वाच्च ॥ ८८ इष्टादिभ्यश्च ॥ छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि ॥ ९० अनुपद्यन्वेष्टा ॥ ९१ साक्षाद्द्रष्टरि संज्ञायाम् ॥ ९२ क्षेत्रियच्परक्षेत्रे चिकित्स्यः ॥ ९३ इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा ॥ ९४ तदस्यास्त्यस्मिन्निति मतुप् ॥ ९५ रसादिभ्यश्च ॥ ९६ प्राणिस्थादातो लजन्यतरस्याम् ॥ ९७ सिध्मादिभ्यश्च ॥ ९८ वत्सांसाभ्यां कामबले ॥ ९९ फेनादिलच्च ॥ १०० लोमादिपामादिपिच्छादिभ्यः शनेलचः ॥ ५ ॥ १०१ प्रज्ञाश्रद्धार्चाभ्यो णः ॥ १०२ तपःसहस्राभ्यां विनीनी ॥ १०३ अण्च ॥ १०४ सिकताशर्कराभ्यां च ॥ १०५ देशे लुबिलचौ च ॥ १०६ दन्त उन्नत उरच् ॥ १०७ ऊषशुषिमुष्कमधो रः ॥ १०८ द्युद्रुभ्यां मः ॥ १०९ केशाद्वोऽन्यतरस्याम् ॥ ११० गाण्ड्यजगात्संज्ञायाम् ॥ १११ काण्डाण्डादीरन्नीरचौ ॥ ११२ रजःकृष्यासुतिपरिषदो वलच् ॥ ११३ दन्तशिखात्संज्ञायाम् ॥ ११४ ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः ११५ अत इनिठनौ ॥ ११६ व्रीह्यादिभ्यश्च ॥ ११७ तुन्दादिभ्य इलच्च ॥ ११८ एकगोपूर्वाट्ठञ्नित्यम् ॥ ११९ शतसहस्रान्ताच्च निष्कात् ॥ १२० रूपादाहतप्रशंसयोर्यप् ॥ ६ ॥ १२१ अस्मायामेधास्रजो विनिः ॥ १२२ बहुलं छन्दसि ॥ १२३ ऊर्णाया युस् ॥ १२४ वाचो ग्मिनिः ॥ १२५ आलजाटचौ बहुभाषिणि ॥ १२६ स्वामिन्नैश्वर्ये ॥ १२७ अर्शआदिभ्योऽच् ॥ १२८ द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः ॥ १२९ वातातीसाराभ्यां कुक्च ॥ १३० वयसि पूरणात् ॥ १३१ सुखादिभ्यश्च ॥ १३२ धर्मशीलवर्णान्ताच्च ॥ १३३ हस्ताज्जातौ ॥ १३४ वर्णाद्ब्रह्मचारिणि ॥ १३५ पुष्करादिभ्यो देशे ॥ १३६ बलादिभ्यो मतुबन्यतरस्याम् ॥ १३७ संज्ञायां मन्माभ्याम् ॥ १३८ कंशंभ्यां बभयुस्तितुतयसः ॥ १३९ ॥ तुन्दिबलिवटेर्भः ॥ १४० अहंशुभमोर्युस् ॥७॥ "धान्यानां व्रातेनकिमोविमुक्तादिभ्यः कालप्रयोजनात्प्रज्ञाश्रद्धास्मायामेधाविंशतिः" ॥

---

## तृतीयः पादः ॥

१ प्राग्दिशो विभक्तिः ॥ २ किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ॥ ३ ॥ इदम इश् ॥ ४ एतेतौ रथोः ॥ ५ एतदोऽन् ॥ ६ सर्वस्य सोऽन्यतरस्यां दि ॥ ७ पञ्चम्यास्तसिल् ॥ ८ तसेश्च ॥ ९ पर्यभिभ्यां च ॥ १० सप्तम्यास्त्रल् ॥ ११ इदमो हः ॥ १२ किमो-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्त् ॥ १३ वा ह च च्छन्दसि ॥ १४ इतराभ्योऽपि दृश्यन्ते ॥ १५ सर्वैकान्यकिंयत्तदः काले दा ॥ १६ इदमो र्हिल् ॥ १७ अधुना ॥ १८ दानीं च ॥ १९ तदो दा च ॥ २० तयोर्दार्हिलौ च च्छन्दसि ॥ १ ॥ २१ अनद्यतने र्हिलन्यतरस्याम् ॥ २२ सद्यः-परुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ॥ २३ प्रकारवचने थाल् ॥ २४ इदमस्थमुः ॥ २५ किमश्च ॥ २६ था हेतौ च च्छन्दसि ॥ २७ दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ॥ २८ दक्षिणोत्तराभ्यामतसुच् ॥ २९ विभाषा परावराभ्याम् ॥ ३० अञ्चेर्लुक् ॥ ३१ उपर्युपरिष्टात् ॥ ३२ पश्चात् ॥ ३३ पश्च पश्चा च च्छन्दसि ॥ ३४ उत्तराधरदक्षिणादातिः ॥ ३५ एनबन्यतरस्यामदूरेऽपञ्चम्याः ॥ ३६ दक्षिणादाच् ॥ ३७ आहि च दूरे ॥ ३८ उत्तराच्च ॥ ३९ पूर्वाधरावराणामसि पुरधवश्चैषाम् ॥ ४० अस्ताति च ॥ २ ॥ ४१ विभाषावरस्य ॥ ४२ संख्याया विधार्थे धा ॥ ४३ अधिकरणविचाले च ॥ ४४ एकाद्धो ध्यमुञन्यतरस्याम् ॥ ४५ द्वित्र्योश्च धमुञ् ॥ ४६ एधाच्च ॥ ४७ याप्ये पाशप् ॥ ४८ पूरणाद्भागे तीयादन् ॥ ४९ प्रागेकादशभ्योऽच्छन्दसि ॥ ५० षष्ठाष्टमाभ्यां ञ च ॥ ५१ मानपश्वङ्गयोः कन्लुकौ च ॥ ५२ एकादाकिनिच्चासहाये ॥ ५३ भूतपूर्वे चरट् ॥ ५४ षष्ठ्या रूप्य च ॥ ५५ अतिशायने तमबिष्ठनौ ॥ ५६ तिङश्च ॥ ५७ द्विवचनविभज्योपपदे तरबीयसुनौ ॥ ५८ अजादी गुणवचनादेव ॥ ५९ तुश्छन्दसि ॥ ६० प्रशस्यस्य श्रः ॥ ३ ॥ ६१ ज्य च ॥ ६२ वृद्धस्य च ॥ ६३ अन्तिकबाढयोर्नेदसाधौ ॥ ६४ युवाल्पयोः कनन्यतरस्याम् ॥ ६५ विन्मतोर्लुक् ॥ ६६ प्रशंसायां रूपप् ॥ ६७ ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ॥ ६८ विभाषा सुपो बहुच्पुरस्तात्तु ॥ ६९ प्रकारवचने जातीयर् ॥ ७० प्रागिवात्कः ॥ ७१ अव्ययसर्वनाम्नामकच्प्राक्टेः ॥ ७२ कस्य च दः ॥ ७३ अज्ञाते ॥ ७४ कुत्सिते ॥ ७५ संज्ञायां कन् ॥ ७६ अनुकम्पायाम् ॥ ७७ नीतौ च तद्युक्तात् ॥ ७८ बह्वचो मनुष्यनाम्नष्ठज्वा ॥ ७९ घनिलचौ च ॥ ८० प्राचामुपादेरडज्वुचौ च ॥ ४ ॥ ८१ जातिनाम्नः कन् ॥ ८२ अजिनान्तस्योत्तरपदलोपश्च ॥ ८३ ठाजादावूर्ध्वं द्वितीयादचः ॥ ८४ शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात् ॥ ८५ अल्पे ॥ ८६ ह्रस्वे ॥ ८७ संज्ञायां कन् ॥ ८८ कुटीशमीशुण्डाभ्यो रः ॥ ८९ कुत्वा डुपच् ॥ ९० कासूगोणीभ्यां ष्टरच् ॥ ९१ वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे ॥ ९२ किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच् ॥ ९३ वा बहूनां जातिपरिप्रश्ने डतमच् ॥ ९४ एकाच्च प्राचाम् ॥ ९५ अवक्षेपणे कन् ॥ ९६ इवे प्रकृतितौ ॥ ९७ संज्ञायां च ॥ ९८ लुम्मनुष्ये ॥ ९९ जीविकार्थे चापण्ये ॥ १०० देवपथादिभ्यश्च ॥ ५ ॥ १०१ वस्तेर्ढञ् ॥ १०२ शिलाया ढः ॥ १०३ शाखादिभ्यो यः ॥ १०४ द्रव्यं च भव्ये ॥ १०५ कुशाग्राच्छः ॥ २०६ समासाच्च तद्विषयात् ॥ १०७ शर्करादिभ्योऽण् ॥ १०८ अङ्गुल्यादि-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ण्यष्ठक् ॥ १०९ एकशालायाष्ठजन्यतरस्याम् ॥ ११० कर्कलोहितादीकक् ॥ १११ प्रत्न-पूर्वविश्वेमात्थाल्छन्दसि ॥ ११२ पूगाञ्ञ्योऽग्रामणीपूर्वात् ॥ ११३ व्रातच्फञोरस्त्रियाम् ॥ ११४ आयुधजीविसंघाञ्ञ्यड्वाहीकेष्वब्राह्मणराजन्यात् ॥ ११५ वृकाट्टेण्यण् ॥ ११६ दामन्यादित्रिगर्तषष्ठाच्छः ॥ ११७ पर्श्वादियौधेयादिभ्योऽणञौ ॥ ११८ अभिजिद्विदभृच्छालावच्छिकावच्छमीवदूर्णावच्छ्रुमदणो यञ् ॥ ११९ ञ्यादयस्तद्राजाः ॥ "प्राग्दिशोनद्यतने विभाषाज्यच जातिनाम्नोवस्तेरेकोनविंशतिः" ॥

---

## चतुर्थः पादः ॥

१ पादशतस्य संख्यादेर्वीप्सायां वुन्लोपश्च ॥ २ दण्डव्यवसर्गयोश्च ॥ ३ स्थूलादिभ्यः प्रकारवचने कन् ॥ ४ अनत्यन्तगतौ क्तात् ॥ ५ न सामिवचने ॥ ६ बृहत्या आच्छादने ॥ ७ अषडक्षाशितंग्वलंकर्मालंपुरुषाध्युत्तरपदात्खः ॥ ८ विभाषाञ्चेरदिक्स्त्रियाम् ॥ ९ जात्यन्ताच्छ बन्धुनि ॥ १० स्थानान्ताद्विभाषा सस्थानेनेति चेत् ॥ ११ किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ॥ १२ अमु च छन्दसि ॥ १३ अनुगादिनष्ठक् ॥ १४ णचः स्त्रियामञ् ॥ १५ अणिनुणः ॥ १६ विसारिणो मत्स्ये ॥ १७ संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् ॥ १८ द्वित्रिचतुर्भ्यः सुच् ॥ १९ एकस्य सकृच्च ॥ २० विभाषा बहोर्धाविप्रकृष्टकाले ॥ १ ॥ २१ तत्प्रकृतवचने मयट् ॥ २२ समूहवच्च बहुषु ॥ २३ अनन्तावसथेतिहभेषजाञ्ञ्यः ॥ २४ देवतान्तात्तादर्थ्ये यत् ॥ २५ पादार्घाभ्यां च ॥ २६ अतिथेर्ञ्यः ॥ २७ देवात्तल् ॥ २८ अवेः कः ॥ २९ यावादिभ्यः कन् ॥ ३० लोहितान्मणौ ॥ ३१ वर्णे चानित्ये ॥ ३२ रक्ते ॥ ३३ कालाच्च ॥ ३४ विनयादिभ्यष्ठक् ॥ ३५ वाचो व्याहृतार्थायाम् ॥ ३६ तद्युक्तात्कर्मणोऽण् ॥ ३७ ओषधेरजातौ ॥ ३८ प्रज्ञादिभ्यश्च ॥ ३९ मृदस्तिकन् ॥ ४० सस्नौ प्रशंसायाम् ॥ २ ॥ ४१ वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि ॥ ४२ बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ॥ ४३ संख्यैकवचनाच्च वीप्सायाम् ॥ ४४ प्रतियोगे पञ्चम्यास्तसिः ॥ ४५ अपादाने चाहीयरुहोः ॥ ४६ अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः ॥ ४७ हीयमानपापयोगाच्च ॥ ४८ षष्ठ्या व्याश्रये ॥ ३४ रोगाच्चापनयने ॥ ५० अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्तरि च्विः ॥ ५१ अरुर्मश्चनक्षुश्चेतोरहोरजसां लोपश्च ॥ ५२ विभाषा साति कात्स्न्ये ॥ ५३ अभिविधौ संपदा च ॥ ५४ तदधीनवचने ॥ ५५ देये त्रा च ॥ ५६ देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् ॥ ५७ अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच् ॥ ५८ कृञो द्वितीयतृतीयशम्बबीजात्कृषौ ॥ ५९ संख्यायाश्च गुणान्तायाः ॥ ६० समयाच्च यापनायाम् ॥ ३ ॥ ६१ सपत्रनिष्पत्रादतिव्यथने ॥ ६२ निष्कुलान्निष्कोषणे ॥ ६३ सुखप्रियादानुलोम्ये ॥ ६४ दुःखात्प्रातिलोम्ये ॥ ६५ शूलात्पाके ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

६६ सत्यादशपथे ॥ ६७ मद्रात्परिवापणे ॥ ६८ समासान्ताः ॥ ६९ न पूजनात् ॥ ७० किमः क्षेपे ॥ ७१ नञस्तत्पुरुषात् ॥ ७२ पथो विभाषा ॥ ७३ बहुव्रीहौ संख्येये डजबहुगणात् ॥ ७४ ऋक्पूरब्धूःपथामानक्षे ॥ ७५ अच्प्रत्यन्ववपूर्वात्सामलोम्नः ॥ ७६ अक्ष्णोऽदर्शनात् ॥ ७७ अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिंदिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः ॥ ७८ ब्रह्महस्तिभ्यां वर्चसः ॥ ७९ अवसमन्धेभ्यस्तमसः ॥ ८० श्वसो वसीयःश्रेयसः ॥ ४ ॥ ८१ अन्ववतप्ताद्रहसः ॥ ८२ प्रतेरुरसः सप्तमीस्थात् ॥ ८३ अनुगवमायामे ॥ ८४ द्विस्तावा त्रिस्तावा वेदिः ॥ ८५ उपसर्गादध्वनः ॥ ८६ तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ॥ ८७ अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ॥ ८८ अह्नोऽह्न एतेभ्यः ॥ ८९ न संख्यादेः समाहारे ॥ ९० उत्तमैकाभ्यां च ॥ ९१ राजाहःसखिभ्यष्टच् ॥ ९२ गोतरद्धितलुकि ॥ ९३ अग्राख्यायामुरसः ॥ ९४ अनोश्मायःसरसां जातिसंज्ञयोः ॥ ९५ ग्रामकौटाभ्यां च तक्ष्णः ॥ ९६ अतेः शुनः ॥ ९७ उपमानादप्राणिषु ॥ ९८ उत्तममृगपूर्वाच्च सक्थ्नः ॥ ९९ नावो द्विगोः ॥ १०० अर्धाच्च ॥ ५ ॥ १०१ खार्याः प्राचाम् ॥ १०२ द्वित्रिभ्यामञ्जलेः ॥ १०३ अनसन्तान्नपुंसकाच्छन्दसि ॥ १०४ ब्रह्मणो जानपदाख्यायाम् ॥ १०५ कुमहद्भ्यामन्यतरस्याम् ॥ १०६ द्वन्द्वाच्चुदषहान्तात्समाहारे ॥ १०७ अव्ययीभावे शरत्प्रभृतिभ्यः ॥ १०८ अनश्च ॥ १०९ नपुंसकादन्यतरस्याम् ११० नदीपौर्णमास्याग्रहायणीभ्यः ॥ १११ झयः ॥ ११२ गिरेश्च सेनकस्य ॥ ११३ बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ॥ ११४ अङ्गुलेर्दारुणि ॥ ११५ द्वित्रिभ्यां ष मूर्ध्नः ॥ ११६ अप्पूरणीप्रमाण्योः ॥ ११७ अन्तर्बहिर्भ्यां च लोम्नः ॥ ११८ अन्नासिकायाः संज्ञायां नसं चास्थूलात् ॥ ११९ उपसर्गाच्च ॥ १२० सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः ॥ ६ ॥ १२१ नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् ॥ १२२ नित्यमसिच्प्रजामेधयोः ॥ १२३ बहुप्रजाश्छन्दसि ॥ १२४ धर्मादनिच्केवलात् ॥ १२५ जम्भा सुहरिततृणसोमेभ्यः ॥ १२६ दक्षिणेर्मा लुब्धयोगे ॥ १२७ इच्कर्मव्यतिहारे ॥ १२८ द्विदण्ड्यादिभ्यश्च ॥ १२९ प्रसंभ्यां जानुनोर्ज्ञुः ॥ १३० ऊर्ध्वाद्विभाषा ॥ १३१ ऊधसोऽनङ् ॥ १३२ धनुषश्च ॥ १३३ वा संज्ञायाम् ॥ १३४ जायाया निङ् ॥ १३५ गन्धस्येदुत्पूतिसुसुरभिभ्यः ॥ १३६ अल्पाख्यायाम् ॥ १३७ उपमानाच्च ॥ १३८ पादस्य लोपोऽहस्त्यादिभ्यः ॥ १३९ कुम्भपदीषु च ॥ १४० संख्यासुपूर्वस्य ॥ ७ ॥ १४१ वयसि दन्तस्य दतृ ॥ १४२ छन्दसि च ॥ १४३ स्त्रियां संज्ञायाम् ॥ १४४ विभाषा श्यावारोकाभ्याम् ॥ १४५ अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च ॥ १४६ ककुदस्यावस्थायां लोपः ॥ १४७ त्रिककुत्पर्वते ॥ १४८ उद्विभ्यां काकुदस्य ॥ १४९ पूर्णाद्विभाषा ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

१५० सुहृद्दुर्हृदौ मित्रामित्रयोः ॥ १५१ उरःप्रभृतिभ्यः कप् ॥ १५२ इनः स्त्रियाम् ॥ १५३ नद्यृतश्च ॥ १५४ शेषाद्विभाषा ॥ १५५ न संज्ञायाम् ॥ १५६ ईयसश्च ॥ १५७ वन्दिते भ्रातुः ॥ १५८ ऋतश्छन्दसि ॥ १५९ नाडीतन्त्र्योः स्वाङ्गे ॥ १६० निष्प्रवाणिश्च ॥ ८ ॥ "पादशतस्य तत्प्रकृतवृकज्ज्येष्ठाभ्यांसपत्रान्ववतप्तात्खार्यानन्दुःसुभ्योवयसिविंशतिः" ॥ इति पञ्चमोऽध्यायः ॥

---

# षष्ठोऽध्यायः ॥

## प्रथमः पादः ।

१ एकाचो द्वे प्रथमस्य ॥ २ अजादेर्द्वितीयस्य ॥ ३ न न्द्राः संयोगादयः ॥ ४ पूर्वोऽभ्यासः ॥ ५ उभे अभ्यस्तम् ॥ ६ जक्षित्यादयः षट् ॥ ७ तुजादीनां दीर्घोऽभ्यासस्य ॥ ८ लिटि धातोरनभ्यासस्य ॥ ९ सन्यङोः ॥ १० श्लौ ॥ ११ चङि ॥ १२ दाश्वान्साह्वान्मीढ्वांश्च ॥ १३ ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे ॥ १४ बन्धुनि बहुव्रीहौ ॥ १५ वचिस्वपियजादीनां किति ॥ १६ ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ॥ १७ लिट्यभ्यासस्योभयेषाम् ॥ १८ स्वापेश्चङि ॥ १९ स्वपिस्यमिव्येञां यङि ॥ २० न वशः ॥ १ ॥ २१ चायः की ॥ २२ स्फायः स्फी निष्ठायाम् ॥ २३ स्त्यः प्रपूर्वस्य ॥ २४ द्रवमूर्तिस्पर्शयोः श्यः ॥ २५ प्रतेश्च ॥ २६ विभाषाभ्यवपूर्वस्य ॥ २७ शृतं पाके ॥ २८ प्यायः पी ॥ २९ लिड्यङोश्च ॥ ३० विभाषा श्वेः ॥ ३१ णौ च संश्चङोः॥३२ ह्वः संप्रसारणम् ॥ ३३ अभ्यस्तस्य च ॥ ३४ बहुलं छन्दसि ॥ ३५ चायः की ॥३६ अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताः श्रितमाशीराशीर्ताः ॥ ३७ न संप्रसारणे संप्रसारणम् ॥ ३८ लिटि वयो यः ॥ ३९ वश्चास्यान्यतरस्यां किति ॥ ४० वेञः ॥ २ ॥४१ ल्यपि च ॥ ४२ ज्यश्च ॥ ४३ व्यश्च ॥४४ विभाषा परेः ॥ ४५ आदेच उपदेशेऽशिति ॥ ४६ न व्यो लिटि ॥ ४७ स्फुरतिस्फुलत्योर्घञि ॥ ४८ क्रीङ्जीनां णौ ॥ ४९ सिध्यतेरपारलौकिके ॥ ५० मीनातिमिनोतिदीङां ल्यपि च ॥ ५१ विभाषा लीयतेः ॥ ५२ खिदेश्छन्दसि ॥ ५३ अपगुरो णमुलि ॥ ५४ चिस्फुरोर्णौ ॥ ५५ प्रजने वीयतेः ॥ ५६ बिभेतेर्हेतुभये ॥ ५७ नित्यं स्मयतेः ॥ ५८ सृजिदृशोर्झल्यमकिति ॥ ५९ अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ॥ ६० शीर्षंश्छन्दसि ॥ ३ ॥ ६१ ये च तद्धिते ॥ ६२ अचि शीर्षः ॥ ६३ पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु ॥ ६४ धात्वादेः षः सः ॥ ६५ णो नः ॥ ६६ लोपो व्योर्वलि ॥ ६७ वेरपृक्तस्य ॥ ६८ हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ॥ ६९ एङ्ह्रस्वात्संबुद्धेः ॥ ७० शेश्छन्दसि बहुलम् ॥ ७१ ह्रस्वस्य पिति कृति तुक् ॥ ७२ संहितायाम् ॥ ७३ छे च ॥ ७४ आङ्माङोश्च ॥ ७५ दीर्घात् ॥७६ पदान्ताद्वा ॥ ७७ इको यणचि ॥ ७८ एचोऽय-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वायावः॥ ७९ वान्तो यि प्रत्यये ॥ ८० धातोस्तन्निमित्तस्यैव ॥ ४ ॥ ८१ क्षय्यजय्यौ शक्यार्थे ॥ ८२ क्रय्यस्तदर्थे ॥ ८३ भय्यप्रवय्ये च च्छन्दसि ॥ ८४ एकः पूर्वपरयोः ॥ ८५ अन्तादिवच्च ॥ ८६ षत्वतुकोरसिद्धः ॥ ८७ आद्गुणः ८८ वृद्धिरेचि ॥ ८९ एत्येधत्यूठ्सु ॥ ९० आटश्च ॥ ९१ उपसर्गादृति धातौ ॥ ९२ वा सुप्यापिशलेः ॥ ९३ औतोम्शसोः ॥ ९४ एङि पररूपम् ॥ ९५ ओमाङोश्च ॥ ९६ उस्यपदान्तात् ॥ ९७ अतो गुणे ॥ ९८ अव्यक्तानुकरणस्यात इतौ ॥ ९९ नाम्रेडितस्यान्त्यस्य तु वा ॥ १०० नित्यमाम्रेडिते डाचि ॥ ५ ॥ १०१ अकः सवर्णे दीर्घः ॥ १०२ प्रथमयोः पूर्वसवर्णः ॥ १०३ तस्माच्छसो नः पुंसि ॥ १०४ नादिचि ॥ १०५ दीर्घाज्जसि च ॥ १०६ वा छन्दसि ॥ १०७ अमि पूर्वः ॥ १०८ संप्रसारणाच्च ॥ १०९ एङः पदान्तादति ॥ ११० ङसिङसोश्च ॥ १११ ऋत उत् ॥ ११२ ख्यत्यात्परस्य ॥ ११३ अतो रोरप्लुतादप्लुते ॥ ११४ हशि च ॥ ११५ प्रकृत्याऽन्तःपादमव्यपरे ॥ ११६ अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च ॥ ११७ यजुष्युरः ॥ ११८ आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बालेऽम्बिके पूर्वे ॥ ११९ अङ्ग इत्यादौ च ॥ १२० अनुदात्ते च कुधपरे ॥ ६ ॥ १२१ अवपथासि च ॥ १२२ सर्वत्र विभाषा गोः ॥ १२३ अवङ् स्फोटायनस्य ॥ १२४ इन्द्रे च ॥ १२५ प्लुतप्रगृह्या अचि नित्यम् ॥ १२६ आङोऽनुनासिकश्छन्दसि ॥ १२७ इकोसवर्णे शाकल्यस्य ह्रस्वश्च ॥ १२८ ऋत्यकः ॥ १२९ अप्लुतवदुपस्थिते ॥ १०३ इ३ चाक्रवर्मणस्य ॥ १३१ दिव उत् ॥ १३२ एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ॥ १३३ स्यश्छन्दसि बहुलम् ॥ १३४ सोऽचि लोपे चेत्पादपूरणम् ॥ २३५ सुट्कात्पूर्वः ॥ १३६ अडभ्यासव्यवायेऽपि ॥ १३७ संपर्युपेभ्यः करोतौ भूषणे ॥ १३८ समवाये च ॥ १३९ उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु ॥ १४० किरतौ लवने ॥ ७ ॥ १४१ हिंसायां प्रतेश्च ॥ १४२ अपाच्चतुष्पाच्छकुनिष्वालेखने ॥ १४३ कुस्तुम्बुरूणि जातिः ॥ १४४ अपरस्पराः क्रियासातत्ये ॥ १४५ गोष्पदं सेवितासेवितप्रमाणेषु ॥ १४६ आस्पदं प्रतिष्ठायाम् ॥ १४७ आश्चर्यमनित्ये ॥ १४८ वर्चस्केऽवस्करः ॥ १४९ अपस्करोरथाङ्गम् ॥ १५० विष्किरः शकुनिर्विकिरो वा ॥ १५१ ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे ॥ १५२ प्रतिष्कशश्च कशेः ॥ १५३ प्रस्कण्वहरिश्चन्द्रावृषी ॥ १५४ मस्करमस्करिणौ वेणुपरिव्राजकयोः ॥ १५५ कास्तीराजस्तुन्दे नगरे ॥ १५६ कारस्करो वृक्षः ॥ १५७ पारस्करप्रभृतीनि च संज्ञायाम् ॥ १५८ अनुदात्तं पदमेकवर्जम् ॥ १५९ कर्षात्वतो घञोन्त उदात्तः ॥ १६० उञ्छादीनां च ॥ ८ ॥ १६१ अनुदात्तस्य च यत्रोदात्तलोपः ॥ १६२ धातोः ॥ १६३ चितः ॥ १६४ तद्धितस्य ॥ १६५ कितः ॥ १६६ तिसृभ्यो जसः ॥ १६७ चतुरः शसि ॥ १६८ सावेकाचस्तृतीयादिर्विभक्तिः ॥ १६९ अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यस-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मासे ॥ १७० अञ्चेश्छन्दस्यसर्वनामस्थानम् ॥ १७१ ऊडिदंपदाद्यप्पुम्रैद्युभ्यः ॥ १७२ अष्टनो दीर्घात् ॥ १७३ शतुरनुमो नद्यजादी ॥ १७४ उदात्तयणो हल्पूर्वात् ॥ १७५ नोङ्धात्वोः ॥ १७६ ह्रस्वनुड्भ्यां मतुप् ॥ १७७ नामन्यतरस्याम् ॥ १७८ ङ्याश्छन्दसि बहुलम् ॥ १७९ षट्त्रिचतुर्भ्यो हलादिः ॥ १८० झल्युपोत्तमम् ॥ ९ ॥ १८१ विभाषा भाषायाम् ॥ १८२ न गोश्वन्साववर्णराडङ्कुङ्कृद्भ्यः ॥ १८३ दिवो झल् ॥ १८४ नृ चान्यतरस्याम् ॥ १८५ तित्स्वरितम् ॥ १८६ तास्यनुदात्तेन्ङिद्दुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः ॥ १८७ आदिः सिचोऽन्यतरस्याम् ॥ १८८ स्वपादिहिंसामच्यनिटि ॥ १८९ अभ्यस्तानामादिः ॥ १९० अनुदात्ते च ॥ १९१ सर्वस्य सुपि ॥ १९२ भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति ॥ १९३ लिति ॥ १९३ आदिर्णमुल्यन्यतरस्याम् ॥ १९५ अचः कर्तृयकि ॥ १९६ थलि च सेटीडन्तो वा ॥ १९७ ञ्नित्यादिर्नित्यम् ॥ १९८ आमन्त्रितस्य च ॥ १९९ पथिमथोः सर्वनामस्थाने ॥ २९० अन्तश्च तवै युगपत् ॥ १० ॥ २०१ क्षयो निवासे ॥ २०२ जयः करणम् ॥ १०३ वृषादीनां च ॥ २०४ संज्ञायामुपमानम् ॥ २०५ निष्ठा च द्व्यजनात् ॥ २०६ शुष्कधृष्टौ ॥ ५०७ आशितः कर्ता ॥ २०८ रिक्ते विभाषा ॥ २०९ जुष्टार्पिते च च्छन्दसि ॥ २१० नित्यं मन्त्रे ॥ २११ युष्मदस्मदोर्ङसि ॥ २१२ ङयि च ॥ २१३ यतोऽनावः ॥ २१४ ईडवन्दवृशंसदुहां ण्यतः ॥ २१५ विभाषा वेण्विन्धानयोः ॥ २१६ त्यागरागहासकुहश्वठक्रथानाम् ॥ २१७ उपोत्तमं रिति ॥ २१८ चङ्यन्यतरस्याम् ॥ २१९ मतोः पूर्वमात्संज्ञायां स्त्रियाम् ॥ १२० अन्तोऽवत्याः ॥ ११ ॥ २२१ ईवत्याः ॥ २२२ चौ ॥ २२३ समासस्य ॥ "एकाचश्चायोल्यपिचयेचक्षय्यजय्यावकः सवर्णेवपथासिहिंसायामनुदात्तस्य विभाषाक्षयईवत्यास्त्रीणि" ॥

---

## द्वितीयः पादः ।

१ बहुव्रीहौ प्रकृत्या पूर्वपदम् ॥ २ तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ॥ ३ वर्णो वर्णेष्वनेते ॥ ४ गाधलवणयोः प्रमाणे ॥ ५ दायाद्यं दायादे ॥ ६ प्रतिबन्धि चिरकृच्छ्रयोः ॥ ७ पदेऽपदेशे ॥ ८ निवाते वातत्राणे ॥ ९ शारदेऽनार्तवे ॥ १० अध्वर्युकषाययोर्जातौ ॥ ११ सदृशप्रतिरूपयोः सादृश्ये ॥ १२ द्विगौ प्रमाणे ॥ १३ गन्तव्यपण्यं वाणिजे ॥ १४ मात्रोपज्ञोपक्रमच्छाये नपुंसके ॥ १५ सुखप्रिययोर्हिते ॥ १६ प्रीतौ च ॥ १७ स्वं स्वामिनि ॥ १८ पत्यावैश्वर्ये ॥ १९ न भूवाक्चिद्दिधिषु ॥ २० वा भुवनम् ॥ १ ॥ २१ आशङ्काबाधनेदीयःसु संभावने ॥ २२ पूर्वे भूतपूर्वे ॥ २३ सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये ॥ २४ विस्पष्टादीनि गुणवचनेषु ॥ २५ श्रज्यावमकन्पापवत्सु भावे कर्मधारये ॥ २६ कुमारश्च ॥ २७ आदिः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रत्येनसि ॥ २८ पूगेष्वन्यतरस्याम् ॥ २९ इगन्तकालकपालभगालशरावेषु द्विगौ ॥ ३० बह्वन्यतरस्याम् ॥ ३१ दिष्टिवितस्त्योश्च ॥ ३२ सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात् ॥ ३३ परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु ॥ ३४ राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु ॥ ३५ संख्या ॥ ३६ आचार्योपसर्जनश्चान्तेवासी ॥ ३७ कार्तकौजपादयश्च ॥ ३८ महान्व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु ॥ ३९ क्षुल्लकश्च वैश्वदेवे ॥ ४० उष्ट्रः सादिवाम्योः ॥ २ ॥ ४१ गौः सादसादिसारथिषु ॥ ४२ कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बलो दासीभाराणां च ॥ ४३ चतुर्थी तदर्थे ॥ ४४ अर्थे ॥ ४५ क्ते च ॥ ४६ कर्मधारयेऽनिष्ठा ॥ ४७ अहीने द्वितीया ॥ ४८ तृतीया कर्मणि ॥ ४९ गतिरनन्तरः ॥ ५० तादौ च निति कृत्यतौ ॥ ५१ तवै चान्तश्च युगपत् ॥ ५२ अनिगन्तोऽञ्चतौ वप्रत्यये ॥ ५३ न्यधी च ॥ ५४ ईषदन्यतरस्याम् ॥ ५५ हिरण्यपरिमाणं धने ॥ ५६ प्रथमोऽचिरोपसंपत्तौ ॥ ५७ कतरकतमौ कर्मधारये ॥ ५८ आर्यो ब्राह्मणकुमारयोः ॥ ५९ राजा च ॥ ६० षष्ठी प्रत्येनसि ॥३॥ ६१ क्ते नित्यार्थे ॥ ६२ ग्रामः शिल्पिनि ॥ ६३ राजा च प्रशंसायाम् ॥ ६४ आदिरुदात्तः ॥ ६५ सप्तमीहारिणौ धर्म्येऽहरणे ॥ ६६ युक्ते च ॥ ६७ विभाषाध्यक्षे ॥ ६८ पापं च शिल्पिनि ॥ ६९ गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे ॥ ७० अङ्गानि मैरेये ॥ ७१ भक्ताख्यास्तदर्थेषु ॥ ७२ गोबिडालसिंहसैन्धवेषूपमाने ॥ ७३ अके जीविकार्थे ॥ ७४ प्राचां क्रीडायाम् ॥ ७५ अणि नियुक्ते ॥ ७६ शिल्पिनि चाकृञः ॥ ७७ संज्ञायां च ॥ ७८ गोतन्तियवं पाले ॥ ७९ णिनि ॥ ८० उपमानं शब्दार्थप्रकृतावेव ॥ ४ ॥ ८१ युक्तारोह्यादयश्च ॥ ८२ दीर्घकाषतुषभ्राष्ट्रवटं जे ॥ ८३ अन्त्यात्पूर्वं बह्वचः ॥ ८४ ग्रामेऽनिवसन्तः ॥ ८५ घोषादिषु च ॥ ८६ छात्र्यादयः शालायाम् ॥ ८७ प्रस्थेऽवृद्धमकर्क्यादीनाम् ॥ ८८ मालादीनां च ॥ ८९ अमहन्नवं नगरेऽनुदीचाम् ॥ ९० अर्मे चावर्णं द्व्यच्त्र्यच् ॥ ९१ न भूताधिकसंजीवमद्राश्मकज्जलम् ॥ ९२ अन्तः ॥ ९३ सर्वं गुणकार्त्स्न्ये ॥ ९४ संज्ञायां गिरिनिकाययोः ॥ ९५ कुमार्यां वयसि ॥ ९६ उदकेऽकेवले ॥ द्विगौ क्रतौ ॥ ९८ सभायां नपुंसके ॥ ९९ पुरे प्राचाम् ॥ १०० अरिष्टगौडपूर्वे च ॥ ५ ॥ १०१ न हास्तिनफलकमार्देयाः ॥ १०२ कुसूलकूपकुम्भशालं बिले ॥ १०३ दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु ॥ १०४ आचार्योपसर्जनश्चान्तेवासिनि ॥ १०५ उत्तरपदवृद्धौ सर्वं च ॥ १०६ बहुव्रीहौ विश्वं संज्ञायाम् ॥ १०७ उदराश्वेषुषु ॥ १०८ क्षेपे ॥ १०९ नदी बन्धुनि ॥ ११० निष्ठोपसर्गपूर्वमन्यतरस्याम् १११ उत्तरपदादिः ॥ ११२ कर्णो वर्णलक्षणात् ॥ ११३ संज्ञौपम्ययोश्च ॥ ११४ कण्ठपृष्ठग्रीवाजङ्घं च ॥ ११५ शृङ्गमवस्थायां च ॥ ११६ नञो जरमरमित्रमृताः ॥ ११७ सोर्मनसी अलोमोषसी ॥ ११८ क्रत्वादयश्च ॥ ११९ आद्यु-


CC.0- Jangamwadi Math Collection. Digitized by eGangotri

दात्तं द्व्यच्छन्दसि ॥ १२० वीरवीर्यौ च ॥ ६ ॥ १२१ कूलतीरतूलमूलशालाक्षसममव्ययीभावे ॥ १२२ कंसमन्थशूर्पपाय्यकाण्डं द्विगौ ॥ १२३ तत्पुरुषे शालायां नपुंसके ॥ १२४ कन्था च ॥ १२५ आदिश्चिहणादीनाम् ॥ १२६ चेलखेटकटुककाण्डं गर्हायाम् ॥ १२७ चीरमुपमानम् ॥ १२८ पललसूपशाकं मिश्रे ॥ १२९ कूलसूदस्थलकर्षाः संज्ञायाम् ॥ १३० अकर्मधारये राज्यम् ॥ १३१ वर्ग्यादयश्च ॥ १३२ पुत्रः पुम्भ्यः ॥ १३३ नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः ॥ १३४ चूर्णादीन्यप्राणिषष्ठ्याः ॥ १३५ षट् च काण्डादीनि ॥ १३६ कुण्डं वनम् ॥ १३७ प्रकृत्या भगालम् ॥ १३८ शितेर्नित्याबह्वज्बहुव्रीहावभसत् ॥ १३९ गतिकारकोपपदात्कृत् ॥ १४० उभे वनस्पत्यादिषु युगपत् ॥ ७ ॥ १४१ देवताद्वन्द्वे च ॥ १४२ नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु ॥ १४३ अन्तः ॥ १४४ थाथघञ्क्ताजबित्रकाणाम् ॥ १४५ सूपमानात् क्तः ॥ १४६ संज्ञायामनाचितादीनाम् ॥ १४७ प्रवृद्धादीनां च ॥ १४८ कारकाद्दत्तश्रुतयोरेवाशिषि ॥ १४९ इत्थंभूतेन कृतमिति च ॥ १५० अनो भावकर्मवचनः ॥ १५१ मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः ॥ १५२ सप्तम्याः पुण्यम् ॥ १५३ ऊनार्थकलहं तृतीयायाः ॥ १५४ मिश्रं चानुपसर्गमसंधौ ॥ १५५ नञो गुणप्रतिषेधे संपाद्यर्हहितालमर्थास्तद्धिताः १५६ ययतोश्चातदर्थे ॥ १५७ अच्कावशक्तौ ॥ १५८ आक्रोशे च ॥ १५९ संज्ञायाम् ॥ १६० कृत्योकेष्णुच्चार्वादयश्च ॥ ८ ॥ १६१ विभाषा तृन्नन्नतीक्ष्णशुचिषु ॥ १६२ बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने ॥ १६३ संख्यायाः स्तनः ॥ १६४ विभाषा छन्दसि ॥ १६५ संज्ञायां मित्राजिनयोः ॥ १६६ व्यवायिनोऽन्तरम् ॥ १६७ मुखं स्वाङ्गम् ॥ १६८ नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः ॥ १६९ निष्ठोपमानादन्यतरस्याम् ॥ १७० जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः ॥ १७१ वा जाते ॥ १७२ नञ्सुभ्याम् ॥ १७३ कपि पूर्वम् ॥ १७४ ह्रस्वान्तेऽन्त्यात्पूर्वम् ॥ १७५ बहोर्नञ्वदुत्तरपदभूम्नि ॥ १७६ न गुणादयोऽवयवाः ॥ १७७ उपसर्गात्स्वाङ्गं ध्रुवमपर्शु ॥ १७८ वनं समासे ॥ १७९ अन्तः ॥ १८० अन्तश्च ॥ ९ ॥ १८१ न निविभ्याम् ॥ १८२ परेरभितोभावि मण्डलम् ॥ १८३ प्रादस्वाङ्गं संज्ञायाम् ॥ १८४ निरुदकादीनि च ॥ १८५ अभेर्मुखम् ॥ १८६ अपाच्च ॥ १८७ स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनामनाम च ॥ १८८ अधेरुपरिस्थम् ॥ १८९ अनोरप्रधानकनीयसी ॥ १९० पुरुषश्चान्वादिष्टः ॥ १९१ अतेरकृत्पदे ॥ १९२ नेरनिधाने ॥ १९३ प्रतेरंश्वादयस्तत्पुरुषे ॥ १९४ उपाद्द्व्यजजिनमगौरादयः ॥ १९५ सोरवक्षेपणे ॥ १९६ विभाषोत्पुच्छे ॥ १९७ द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ॥ १९८ सक्थं चाक्रान्तात् ॥ १९९ परादिश्छन्दसि बहुलम् ॥ "बहुव्रीहावाशङ्कागौः सादक्तेनित्यार्थेयुक्तानह्वाक्षिनकूलतीरदेवताविभाषनननिव्येकोनविंशतिः" ॥

---

## तृतीयः पादः।

१ अलुगुत्तरपदे ॥ २ पञ्चम्याः स्तोकादिभ्यः ॥ ३ ओजःसहोऽम्भस्तमसस्तृतीयायाः ॥ ४ मनसः संज्ञायाम् ॥ ५ आज्ञायिनि च ॥ ६ आत्मनश्च पूरणे ॥ ७ वैयाकरणाख्यायां चतुर्थ्याः ॥ ८ परस्य च ॥ ९ हलदन्तात्सप्तम्याः संज्ञायाम् ॥ १० कारनाम्नि च प्राचां हलादौ ॥ ११ मध्याद्गुरौ ॥ १२ अमूर्धमस्तकात्स्वाङ्गादकामे ॥ १३ बन्धे च विभाषा ॥ १४ तत्पुरुषे कृति बहुलम् ॥ १५ प्रावृट्शरत्कालदिवां जे ॥ १६ विभाषा वर्षक्षरशरवरात् ॥ १७ घकालतनेषु कालनाम्नः ॥ १८ शयवासवासिष्वकालात् ॥ १९ नेन्सिद्धबध्नातिषु च ॥ २० स्थे च भाषायाम् ॥ १ ॥ २१ षष्ठ्या आक्रोशे ॥ २२ पुत्रेऽन्यतरस्याम् ॥ २३ ऋतो विद्यायोनिसंबन्धेभ्यः ॥ २४ विभाषा स्वसृपत्योः ॥ २५ आनङृतो द्वन्द्वे ॥ २६ देवताद्वन्द्वे च ॥ २७ ईदग्नेः सोमवरुणयोः ॥ इद्वृद्धौ ॥ २९ दिवो द्यावा ॥ ३० दिवसश्च पृथिव्याम् ॥ ३१ उषासोषसः ॥ ३२ मातरपितरावुदीचाम् ॥ ३३ पितरामातरा च छन्दसि ॥ ३४ स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ॥ ३५ तसिलादिष्वा कृत्वसुचः ॥ ३६ क्यङ्मानिनोश्च ३७ न कोपधायाः ॥ ३८ संज्ञापूरण्योश्च ॥ ३९ वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे ॥ ४० स्वाङ्गाच्चेतोऽमानिनि ॥ २ ॥ ४१ जातेश्च ॥ ४२ पुंवत्कर्मधारयजातीयदेशीयेषु ॥ ४३ घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ॥ ४४ नद्याः शेषस्यान्यतरस्याम् ॥ उगितश्च ॥ ४६ आन्महतः समानाधिकरणजातीययोः ॥ ४७ द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ॥ ४८ त्रेस्त्रयः ॥ ४९ विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ॥ ५० हृदयस्य हृल्लेखयदण्लासेषु ॥ ५१ वा शोकष्यञ्रोगेषु ॥ ५२ पादस्य पदाज्यातिगोपहतेषु ॥ ५३ पद्यत्यतदर्थे ॥ ५४ हिमकाषिहतिषु च ॥ ५५ ऋचः शे ॥ ५६ वा घोषमिश्रशब्देषु ॥ ५७ उदकस्योदः संज्ञायाम् ॥ ५८ पेषंवासवाहनधिषु च ॥ ५९ एकहलादौ पूरयितव्येऽन्यतरस्याम् ॥ ६० मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च ॥३॥६१ इको ह्रस्वोऽङ्यो गालवस्य ॥ ६२ एक तद्धिते च ॥ ६३ ङ्यापोः संज्ञाछन्दसोर्बहुलम् ॥ ६४ त्वे च ॥ ६५ इष्टकेषीकामालानां चिततूलभारिषु ॥ ६६ खित्यनव्ययस्य ॥ ६७ अरुर्द्विषदजन्तस्य मुम् ॥ ६८ इच एकाचोऽम्प्रत्ययवच्च ॥ ६९ वाचंयमपुरंदरौ च ॥ ७० कारेसत्यागदस्य ॥ ७१ श्येनतिलस्य पाते ञे ॥ ७२ रात्रेः कृति विभाषा ॥ ७३ नलोपो नञः ॥ ७४ तस्मान्नुडचि ॥ ७५ नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या ॥ ७६ एकादिश्चैकस्य चादुक् ॥ ७७ नगोऽप्राणिष्वन्यतरस्याम् ॥ ७८ सहस्य सः संज्ञायाम् ॥ ७९ ग्रन्थान्ताधिके च ॥ ८० द्वितीये चानुपाख्ये ॥ ४ ॥ ८१ अव्ययीभावे चाकाले ॥ ८२ वोपसर्जनस्य ॥ ८३ प्रकृत्याशिष्यगोवत्सहलेषु ॥ ८४ समानस्य

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

छन्दस्यमूर्धप्रभृत्युदर्केषु ॥ ८५ ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु ॥ ८६ चरणे ब्रह्मचारिणि ॥ ८७ तीर्थे ये ॥ ८८ विभाषोदरे ॥ ८९ दृग्दृशवतुषु॥ ९० इदंकिमोरीश्की ॥ ९१ आ सर्वनाम्नः ॥ ९२ विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये ॥ ९३ समः समि ॥ ९४ तिरसस्तिर्यलोपे ॥ ९५ सहस्य सध्रिः ॥ ९६ सध मादस्थयोश्छन्दसि ॥ ९७ द्व्यन्तरुपसर्गेभ्योऽप ईत् ॥ ९८ ऊदनोर्देशे ॥ ९९ अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु ॥ १०० अर्थेविभाषा ॥ ५ ॥ १०१ कोः कत्तत्पुरुषेऽचि ॥ १०२ रथवदयोश्च ॥ १०३ तृणे च जातौ ॥ १०४ का पथ्यक्षयोः ॥ १०५ ईषदर्थे ॥ १०६ विभाषा पुरुषे ॥ १०७ कवं चोष्णे ॥ १०८ पथि च च्छन्दसि ॥ १०९ पृषोदरादीनि यथोपदिष्टम् ॥ ११० संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ ॥ १११ ढ्रलोपे पूर्वस्य दीर्घोऽणः ॥ ११२ सहिवहोरोदवर्णस्य ॥ ११३ साढ्यै साढ्वा साढेति निगमे ॥ ११४ संहितायाम् ॥ ११५ कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य ॥ ११६ नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ॥ ११७ वनगिर्योः संज्ञायां कोटरकिंशुलुकादीनाम् ॥ ११८ वले ॥ ११९ मतौ बह्वचोऽनजिरादीनाम् ॥ १२० शरादीनां च ॥ ६ ॥ १२१ इको वहेऽपीलोः ॥ १२२ उपसर्गस्य घञ्यमनुष्ये बहुलम् ॥ १२३ इकः काशे ॥ १२४ दस्ति १२५ अष्टनः संज्ञायाम् ॥ १२६ छन्दसि च ॥ १२७ चितेः कपि ॥ १२८ विश्वस्य वसुराटोः ॥ १२९ नरे संज्ञायाम् ॥ १३० मित्रे चर्षौ ॥ १३१ मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ ॥ १३२ ॥ ओषधेश्च विभक्तावप्रथमायाम् ॥ १३३ ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ॥ १३४ इकः सुञि ॥ १३५ द्व्यचोऽतस्तिङः ॥ १३६ निपातस्य च ॥ १३७ अन्येषामपि दृश्यते ॥ १३८ चौ ॥ १३९ संप्रसारणस्य ॥ "अलुक्षष्ठ्याजातेरिकोऽव्ययीभावे कोःकत्तद्विकोवह एकोनविंशतिः" ॥

---

## चतुर्थः पादः ।

१ अङ्गस्य ॥ २ हलः ॥ ३ नामि ॥ ४ न तिसृचतसृ ॥ ५ छन्दस्युभयथा ॥ ६ नृ च ॥ ७ नोपधायाः ॥ ८ सर्वनामस्थाने चासंबुद्धौ ॥ ९ वा षपूर्वस्य निगमे ॥ १० सान्तमहतः संयोगस्य ॥ ११ अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम् ॥ १२ इन्हन्पूषार्यम्णां शौ ॥ १३ सौ च ॥ १४ अत्वसन्तस्य चाधातोः ॥ १५ अनुनासिकस्य क्विझलोः क्ङिति ॥ १६ अज्झनगमां सनि ॥ १७ तनोतेर्विभाषा ॥ १८ क्रमश्च क्त्वि ॥ १९ च्छ्वोः शूडनुनासिके च ॥ २० ज्वरत्वरस्रिव्यविमवामुपधायाश्च ॥ ॥ १ ॥ २१ राल्लोपः ॥ २२ असिद्धवदत्राभात् ॥ २३ श्नान्नलोपः ॥ २४ अनिदितां हल उपधायाः क्ङिति ॥ २५ दंशसञ्जस्वञ्जां शपि ॥ २६ रञ्जेश्च ॥ २७ घञि च भा-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वकरणयोः ॥ २८ स्यदो जवे ॥ २९ अवोदैधौद्मप्रश्रथहिमश्रथाः ॥ ३० नाञ्चेः पूजायाम् ॥ ३१ क्त्वि स्कन्दिस्यन्दोः ॥ ३२ जान्तनशां विभाषा ॥ ३३ भञ्जेश्च चिणि ॥ ३४ शास इदङ्हलोः ॥ ३५ शा हौ ॥ ३६ हन्तेर्जः ॥ ३७ अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ॥ ३८ वा ल्यपि ॥ ३९ न क्तिचि दीर्घश्च ॥ ४० गमः क्वौ ॥ २ ॥ ४१ विड्वनोरनुनासिकस्यात् ॥ ४२ जनसनखनां सञ्झलोः ॥ ४३ ये विभाषा ॥ ४४ तनोतेर्यकि ॥ ४५ सनः क्तिचि लोपश्चास्यान्यतरस्याम् ॥ ४६ आर्धधातुके ॥ ४७ भ्रस्जो रोपधयो रमन्यतरस्याम् ॥ ४८ अतो लोपः ॥ ४९ यस्य हलः ॥ ५० क्यस्य विभाषा ॥ ५१ णेरनिटि ॥ ५२ निष्ठायां सेटि ॥ ५३ जनिता मन्त्रे ॥ ५४ शमिता यज्ञे ॥ ५५ अयामन्ताल्वाय्येत्न्विष्णुषु ॥ ५६ ल्यपि लघुपूर्वात् ॥ ५७ विभाषापः ॥ ५८ युप्लुवोर्दीर्घश्छन्दसि ॥ ५९ क्षियः ॥ ६० निष्ठायामण्यदर्थे ॥ ३ ॥ ६१ वाक्रोशदैन्ययोः ॥ ६२ स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ॥ ६३ दीङो युडचि क्ङिति ॥ ६४ आतो लोप इटि च ॥ ६५ ईद्यति ॥ ६६ घुमास्थागापाजहातिसां हलि ॥ ६७ एर्लिङि ॥ ६८ वान्यस्य संयोगादेः ॥ ६९ न ल्यपि ॥ ७० मयतेरिदन्यतरस्याम् ॥ ७१ लुङ्लङ्लृङ्क्ष्वडुदात्तः ॥ ७२ आडजादीनाम् ॥ ७३ छन्दस्यपि दृश्यते ॥ ७४ न माङ्योगे ॥ ७५ बहुलं छन्दस्यमाङ्योगेऽपि ॥ ७६ इरयो रे ॥ ७७ अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ॥ ७८ अभ्यासस्यासवर्णे ॥ ७९ स्त्रियाः ॥ ८० वाम्शसोः ॥ ४ ॥ ८१ इणो यण् ॥ ८२ एरनेकाचोऽसंयोगपूर्वस्य ॥ ८३ ओः सुपि ॥ ८४ वर्षाभ्वश्च ॥ ८५ न भूसुधियोः ॥ ८६ छन्दस्युभयथा ॥ ८७ हुश्नुवोः सार्वधातुके ॥ ८८ भुवो वुग्लुङ्लिटोः ॥ ८९ ऊदुपधाया गोहः ॥ ९० दोषो णौ ॥ ९१ वा चित्तविरागे ॥ ९२ मितां ह्रस्वः ॥ ९३ चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ॥ ९४ खचि ह्रस्वः ॥ ९५ ह्लादो निष्ठायाम् ॥ ९६ छादेर्घेऽद्व्युपसर्गस्य ॥ ९७ इस्मन्त्रन्क्विषु च ॥ ९८ गमहनजनखनघसां लोपः क्ङित्यनङि ॥ ९९ तनिपत्योश्छन्दसि ॥ १०० घसिभसोर्हलि च ॥ ५ ॥ १०१ हुझल्भ्यो हेर्धिः ॥ १०२ श्रुशृणुपॄकृवृभ्यश्छन्दसि ॥ १०३ अङितश्च ॥ १०४ चिणो लुक् ॥ १०५ अतो हेः ॥ १०६ उतश्च प्रत्ययादसंयोगपूर्वात् ॥ १०७ लोपश्चास्यान्यतरस्यां म्वोः ॥ १०८ नित्यं करोतेः ॥ १०९ ये च ॥ ११० अत उत्सार्वधातुके ॥ १११ श्नसोरल्लोपः ॥ ११२ श्नाभ्यस्तयोरातः ॥ ११३ ई हल्यघोः ॥ ११४ इद्दरिद्रस्य ॥ ११५ भियोऽन्यतरस्याम् ॥ ११६ जहातेश्च ॥ ११७ आ च हौ ॥ ११८ लोपो यि ॥ ११९ घ्वसोरेद्धावभ्यासलोपश्च ॥ १२० अत एकहल्मध्येऽनादेशादेर्लिटि ॥ ६ ॥ १२१ थलि च सेटि ॥ १२२ तॄफलभजत्रपश्च ॥ १२३ राधो हिंसायाम् ॥ १२४ वा जॄभ्रमुत्रसाम् ॥ १२५ फणां च सप्तानाम् ॥ १२६ न शसददवादिगुणानाम् ॥ १२७ अर्वणस्त्रसाव-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नञः ॥ १२८ मघवा बहुलम् ॥१२९ भस्य ॥ १३० पादः पत् ॥ १३१ वसोः संप्रसारणम् ॥ १३२ वाह ऊठ् ॥ १३३ श्वयुवमघोनामतद्धिते ॥ १३४ अल्लोपोऽनः ॥ १३५ षपूर्वहन्धृतराज्ञामणि ॥ १३६ विभाषा ङिश्योः ॥ १३७ न संयोगाद्वमन्तात् ॥ १३८ अचः ॥ १३९ उद ईत् ॥ १४० आतो धातोः ॥ ७ ॥ १४१ मन्त्रेष्वाङ्यादेरात्मनः ॥ १४२ ति विंशतेर्डिति ॥ १४३ टेः ॥ १४४ नस्तद्धिते ॥ ॥ १४५ अह्नष्टखोरेव ॥ १४६ ओर्गुणः ॥ १४७ ढे लोपो ऽकद्र्वाः ॥ १४८ यस्येति च ॥ १४९ सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ॥ १५० हलस्तद्धितस्य ॥१५१ आपत्यस्य च तद्धितेऽनाति ॥ १५२ क्यच्व्योश्च ॥ १५३ बिल्वकादिभ्यश्छस्य लुक् ॥ १५४ तुरिष्ठेमेयःसु ॥ १५५ टेः ॥ १५६ स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः ॥ १५७ प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः॥१५८ बहोर्लोपो भू च बहोः ॥१५९ इष्ठस्य यिट् च ॥१६० ज्यादादीयसः ॥ ८॥ १६१ र ऋतो हलादेर्लघोः ॥ १६२ विभाषर्जोश्छन्दसि ॥ १६३ प्रकृत्यैकाच् ॥ १६४ इनण्यनपत्ये ॥ १६५ गाथिविदथिकेशिगणिपणिनश्च ॥ १६६ संयोगादिश्च ॥ १६७ अन् ॥ १६८ ये चाभावकर्मणोः ॥ १६९ आत्माध्वानौ खे ॥ १७० न मपूर्वोऽपत्येऽवर्मणः ॥ १७१ ब्राह्मोऽजातौ ॥ १७२ कार्मस्ताच्छील्ये ॥ १७३ औक्षमनपत्ये ॥ १७४ दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि ॥ १७५ ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि ॥ "अङ्गस्यराल्लोपोविड्वनोर्वाक्रोशेणोयणूहुझल्भ्यस्थलिचमन्त्रेषुरऋतः पञ्चदश" ॥ इति षष्ठोध्यायः

---

# सप्तमोऽध्यायः ।

## प्रथमः पादः ।

१ युवोरनाकौ ॥ २ आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ॥ ३ झोऽन्तः ॥ ४ अदभ्यस्तात् ॥ ५ आत्मनेपदेष्वनतः ॥ ६ शीङो रुट् ॥ ७ वेत्तेर्विभाषा ॥ ८ बहुलं छन्दसि ॥ ९ अतो भिस ऐस् ॥ १० बहुलं छन्दसि ॥ ११ नेदमदसोरकोः ॥ १२ टाङसिङसामिनात्स्याः ॥ १३ ङेर्यः ॥ १४ सर्वनाम्नः स्मै ॥ १५ ङसिङ्योः स्मात्स्मिनौ ॥ १६ पूर्वादिभ्यो नवभ्यो वा ॥ १७ जसः शी ॥ १८ औङ आपः ॥ १९ नपुंसकाच्च ॥ २० जश्शसोः शिः ॥ १ ॥ २१ अष्टाभ्य औश् ॥ २२ षड्भ्यो लुक् ॥ २३ स्वमोर्नपुंसकात् ॥ २४ अतोम् ॥ २५ अद्ड्डतरादिभ्यः पञ्चभ्यः ॥ २६ नेतराच्छन्दसि ॥ २७ युष्मदस्मद्भ्यां ङसोऽश् ॥ २८ ङेप्रथमयोरम् ॥ २९ शसो न ॥ ३० भ्यसो भ्यम् ॥ ३१ पञ्चम्या अत् ॥ ३२ एकवचनस्य च ॥ ३३ साम आकम् ॥ ३४ आत औ णलः ॥ ३५ तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

३६ विदेः शतुर्वसुः ॥ ३७ समासेऽनञ्पूर्वे क्त्वो ल्यप् ॥ ३८ क्त्वापि च्छन्दसि ॥ ३९ सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ॥ ४० अमो मश् ॥ २ ॥ ४१ लोपस्त आत्मनेपदेषु ॥ ४२ ध्वमो ध्वात् ॥ ४३ यजध्वैनमिति च ॥ ४४ तस्य तात् ॥ ४५ तप्तनप्तनथनाश्च ॥ ४६ इदन्तो मसि ॥ ४७ क्त्वो यक् ॥ ४८ इष्ट्वीनमिति च ॥ ४९ स्नात्व्यादयश्च ॥ ५० आज्जसेरसुक् ॥ ५१ अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ॥ ५२ आमि सर्वनाम्नः सुट् ॥ ५३ त्रेस्त्रयः ॥ ५४ ह्रस्वनद्यापो नुट् ॥ ५५ षट्चतुर्भ्यश्च ॥ ५६ श्रीग्रामण्योश्छन्दसि ॥ ५७ गोः पादान्ते ॥ ५८ इदितो नुम्धातोः ॥ ५९ शे मुचादीनाम् ॥ ६० मस्जिनशोर्झलि ॥ ३ ॥ ६१ रधिजभोरचि ॥ ६२ नेट्यलिटि रधेः ॥ ६३ रभेरशब्लिटोः ॥ ६४ लभेश्च ॥ ६५ आङो यि ॥ ६६ उपात्प्रशंसायाम् ॥ ६७ उपसर्गात्खल्घञोः ॥ ६८ न सुदुर्भ्यां केवलाभ्याम् ॥ ६९ विभाषा चिण्णमुलोः ॥ ७० उगिदचां सर्वनामस्थानेऽधातोः ॥ ७१ युजेरसमासे ॥ ७२ नपुंकसस्य झलचः ॥ ७३ इकोऽचि विभक्तौ ॥ ७४ तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ॥ ७५ अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ॥ ७६ छन्दस्यपि दृश्यते ॥ ७७ ई च द्विवचने ॥ ७८ नाभ्यस्ताच्छतुः ॥ ७९ वा नपुंसकस्य ॥ ८० आच्छीनद्योर्नुम् ॥ ४ ॥ ८१ शप्श्यनोर्नित्यम् ॥ ८२ सावनडुहः ॥ ८३ दृक्स्ववःस्वतवसां छन्दसि ॥ ८४ दिव औत् ॥ ८५ पथिमथ्यृभुक्षामात् ॥ ८६ इतोऽत्सर्वनामस्थाने ॥ ८७ थो न्थः ॥ ८८ भस्य टेर्लोपः ॥ ८९ पुंसोऽसुङ् ॥ ९० गोतो णित् ॥ ९१ णलुत्तमो वा ॥ ९२ सख्युरसंबुद्धौ ॥ ९३ अनङ् सौ ॥ ९४ ऋदुशनस्पुरुदंसोनेहसां च ॥ ९५ तृज्वत्क्रोष्टुः ॥ ९६ स्त्रियां च ॥ ९७ विभाषा तृतीयादिष्वचि ॥ ९८ चतुरनडुहोरामुदात्तः ॥ ९९ अम्संबुद्धौ ॥ १०० ऋत इद्धातोः ॥ ५ ॥ १०१ उपधायाश्च ॥ १०२ उदोष्ठ्यपूर्वस्य ॥ १०३ बहुलं छन्दसि ॥ "युवोरष्टाभ्यो लोपस्तरधिशप्श्यनोरुपधायास्त्रीणि" ॥

---

## द्वितीयः पादः ।

१ सिचि वृद्धिः परस्मैपदेषु ॥ २ अतो ल्रान्तस्य ॥ ३ वदव्रजहलन्तस्याचः ॥ ४ नेटि ॥ ५ ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ॥ ६ ऊर्णोतेर्विभाषा ॥ ७ अतो हलादेर्लघोः ॥ ८ नेड्वशि कृति ॥ ९ तितुत्रतथसिसुसरकसेषु च ॥ १० एकाच उपदेशेऽनुदात्तात् ॥ ११ श्र्युकः किति ॥ १२ सनि ग्रहगुहोश्च ॥ १३ कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ॥ १४ श्वीदितोनिष्ठायाम् ॥ १५ यस्य विभाषा ॥ १६ आदितश्च ॥ १७ विभाषा भावादिकर्मणोः ॥ १८ क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु ॥ १९ धृषिशसी वैयात्ये ॥ २० दृढः स्थूलबलयोः ॥ १ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

२१ प्रभौ परिवृढः ॥ २२ कृच्छ्रगहनयोः कषः ॥ २३ घुषिरविशब्दने ॥ २४ अर्देः संनिविभ्यः ॥ २५ अभेश्चाविदूर्ये ॥ २६ णेरध्ययने वृत्तम् ॥ २७ वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ॥ २८ रुष्यमत्वरसंघुषास्वनाम् ॥ २९ हृषेर्लोमसु ॥ ३० अपचितश्च ॥ ३१ हु ह्वरेश्छन्दसि ॥ ३२ अपरिह्वृताश्च ॥ ३३ सोमे ह्वरितः ॥ ३४ ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिवमित्यमितीति च ॥ ३५ आर्धधातुकस्येड्वलादेः ॥ ३६ स्नुक्रमोरनात्मनेपदनिमित्ते ॥ ३७ ग्रहोऽलिटि दीर्घः ॥ ३८ वृतो वा ॥ ३९ न लिङि ॥ ४० सिचि च परस्मैपदेषु ॥ २ ॥ ४१ इट् सनि वा ॥ ४२ लिङ्सिचोरात्मनेपदेषु ॥ ४३ ऋतश्च संयोगादेः ॥ ४४ स्वरतिसूतिसूयतिधूञूदितो वा ॥ ४५ रधादिभ्यश्च ॥ ४६ निरः कुषः ॥ ४७ इण्निष्ठायाम् ॥ ४८ तीषसहलुभरुषरिषः ॥ ४९ सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ॥ ५० क्लिशः क्त्वानिष्ठयोः ॥ ५१ पूङश्च ॥ ५२ वसतिक्षुधोरिट् ॥ ५३ अञ्चेः पूजायाम् ॥ ५४ लुभो विमोहने ॥ ५५ जॄव्रश्च्योः क्त्वि ॥ ५६ उदितो वा ५७ ॥ ५७ सेऽसिचि कृतचृतच्छृदतृदनृतः ॥ ५८ गमेरिट् परस्मैपदेषु ॥ ५९ न वृद्भ्यश्चतुर्भ्यः ॥ ६० तासि च क्लृपः ॥ ३ ॥ ६१ अचस्तास्वत्थल्यनिटो नित्यम् ॥ ६२ उपदेशेऽत्वतः ॥ ६३ ऋतो भारद्वाजस्य ॥ ६४ बभूथाततन्थजगृम्भववर्थेति निगमे ॥ ६५ विभाषा सृजिदृशोः ॥ ६६ इडत्त्यर्तिव्ययतीनाम् ॥ ६७ वस्वेकाजाद्धसाम् ॥ ६८ विभाषा गमहनविदविशाम् ॥ ६९ सनिंससनिवांसम् ॥ ७० ऋद्धनोः स्ये ॥ ७१ अञ्जेः सिचि ॥ ७२ स्तुसुधूञ्भ्यः परस्मैपदेषु ॥ ७३ यमरमनमातां सक्च ॥ ७४ स्मिपूङ्रञ्ज्वशां सनि ॥ ७५ किरश्च पञ्चभ्यः ॥ ७६ रुदादिभ्यः सार्वधातुके ॥ ७७ ईशः से ७८ ॥ ईडजनोर्ध्वे च ॥ ७९ लिङः सलोपोऽनन्त्यस्य ॥ ८० अतो येयः ॥ ४ ॥ ८१ आतो ङितः ॥ ८१ आने मुक् ॥ ८१ ईदासः ॥ ८४ अष्टन आ विभक्तौ ॥ ८५ रायो हलि ८६ युष्मदस्मदोरनादेशे ॥ ८७ द्वितीयायां च ॥ ८८ प्रथमायाश्च द्विवचने भाषायाम् ॥ ८९ योऽचि ॥ ९० शेषे लोपः ॥ ९१ मपर्यन्तस्य ॥ ९२ युवावौ द्विवचने ॥ ९३ यूयवयौ जसि ॥ ९४ त्वाहौ सौ ॥ ९५ तुभ्यमह्यौ ङयि ॥ ९६ तवममौ ङसि ॥ ९७ त्वमावेकवचने ॥ ९८ प्रत्ययोत्तरपदयोश्च ॥ ९९ त्रिचतुरोः स्त्रियां तिसृचतसृ ॥ १०० अचि र ऋतः ॥ ५ ॥ १०१ जराया जरसन्यतरस्याम् ॥ १०२ त्यदादीनामः ॥ १०३ किमः कः ॥ १०४ कु तिहोः ॥ १०५ क्वाति ॥ १०६ तदोः सः सावनन्त्ययोः ॥ १०७ अदस औ सुलोपश्च ॥ १०८ इदमो मः ॥ १०९ दश्च ॥ ११० यः सौ ॥ १११ इदोऽय् पुंसि ॥ ११२ अनाप्यकः ॥ ११३ हलि लोपः ॥ ११४ मृजेर्वृद्धिः ॥ ११५ अचो

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ञ्णिति ॥ ११६ अत उपधायाः ॥ ११७ तद्धितेष्वचामादेः ॥ ११८ किति च ॥
"सिचिप्रभाविट्सन्यचस्तास्वदातोजराया अष्टादश" ॥

---

## तृतीयः पादः ॥

१ देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् ॥ २ केकयमित्रयुप्रलयानां यादेरियः ॥ ३ न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ॥ ४ द्वारादीनां च ॥ ५ न्यग्रोधस्य च केवलस्य ॥ ६ न कर्मव्यतिहारे ॥ ७ स्वागतादीनां च ॥ ८ श्वादेरिञि ॥ ९ पदान्तस्यान्यतरस्याम् ॥ १० उत्तरपदस्य ॥ ११ अवयवादृतोः ॥ १२ सुसर्वार्धाज्जनपदस्य ॥ १३ दिशोऽमद्राणाम् ॥ १४ प्राचां ग्रामनगराणाम् ॥ १५ संख्यायाः संवत्सरसंख्यस्य च ॥ १६ वर्षस्याभविष्यति ॥ १७ परिमाणान्तस्यासंज्ञाशाणयोः ॥ १८ जे प्रोष्ठपदानाम् ॥ १९ हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ॥ २० अनुशतिकादीनां च ॥ १ ॥ २१ देवताद्वन्द्वे च ॥ २२ नेन्द्रस्य परस्य ॥ २३ दीर्घाच्च वरुणस्य ॥ २४ प्राचां नगरान्ते ॥ २५ जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम् ॥ २६ अर्धात्परिमाणस्य पूर्वस्य तु वा ॥ २७ नातः परस्य ॥ २८ प्रवाहणस्य ढे ॥ २९ तत्प्रत्ययस्य च ॥ ३० नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम् ॥ ३१ यथातथयथापुरयोः पर्यायेण ॥ ३२ हनस्तोऽचिण्णलोः ॥ ३३ आतो युक्चिण्कृतोः ॥ ३४ नोदात्तोपदेशस्य मान्तस्यानाचमेः ॥ ३५ जनिवध्योश्च ॥ ३६ अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ ॥ ३७ शाच्छासाह्वाव्यावेपां युक् ॥ ३८ वो विधूनने जुक् ॥ ३९ लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने ॥ ४० भियो हेतुभये षुक् ॥ २ ॥ ४१ स्फायो वः ॥ ४२ शदेरगतौ तः ॥ ४३ रुहः पोऽन्यतरस्याम् ॥ ४४ प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ॥ ४५ न यासयोः ॥ ४६ उदीचामातः स्थाने यकपूर्वायाः ॥ ४७ भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि ॥ ४८ अभाषितपुंस्काच्च ॥ ४९ आदाचार्याणाम् ॥ ५० ठस्येकः ॥ ५१ इसुसुक्तान्तात्कः ॥ ५२ चजोः कु घिण्ण्यतोः ॥ ५३ न्यङ्क्वादीनां च ॥ ५४ हो हन्तेर्ञ्णिन्नेषु ॥ ५५ अभ्यासाच्च ॥ ५६ हेरचङि ॥ ५७ सन्लिटोर्जेः ॥ ५८ विभाषा चेः ॥ ५९ न क्वादेः ॥ ६० अजिव्रज्योश्च ॥ ३ ॥ ६१ भुजन्युब्जौ पाण्युपतापयोः ॥ ६२ प्रयाजानुयाजौ यज्ञाङ्गे ॥ ६३ वञ्चेर्गतौ ॥ ६४ ओक उचः के ॥ ६५ ण्य आवश्यके ॥ ६६ यजयाचरुचप्रवचर्चश्च ॥ ६७ वचोऽशब्दसंज्ञायाम् ॥ ६८ प्रयोज्यनियोज्यौ शक्यार्थे ॥ ६९ भोज्यं भक्ष्ये ॥ ७० घोर्लोपो लेटि वा ॥ ७१ ओतः श्यनि ॥ ७२ क्सस्याचि ॥ ७३ लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ॥ ७४ शमामष्टानां दीर्घः श्यनि ॥ ७५ ष्ठिवुक्लमुचमां शिति ॥ ७६ क्रमः परस्मैपदेषु ॥ ७७ इषुगमियमां छः ॥ ७८ पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्छधौशीयसीदाः ॥


CC.0- Jangamwadi Math Collection. Digitized by eGangotri

७९ ज्ञाजनोर्जा ॥ ८० प्वादीनां ह्रस्वः ॥ ४ ॥ ८१ मीनातेर्निगमे ॥ ८२ मिदेर्गुणः ॥ ८३ जुसि च ॥ ८४ सार्वधातुकार्धधातुकयोः ॥ ८५ जाग्रोऽविचिण्णल्ङित्सु ॥ ८६ पुगन्तलघूपधस्य च ॥ ८७ नाभ्यस्तस्याचि पिति सार्वधातुके ॥ ८८ भूसुवोस्तिङि ॥ ८९ उतो वृद्धिर्लुकि हलि ॥ ९० उर्णोतेर्विभाषा ॥ ९१ गुणोऽपृक्ते ॥ ९२ तृणह इम् ॥ ९३ ब्रुव ईट् ॥ ९४ यङो वा ॥ ९५ तुरुस्तुशम्यमः सार्वधातुके ॥ ९६ अस्तिसिचोऽपृक्ते ॥ ९७ बहुलं छन्दसि ॥ ९८ रुदश्च पञ्चभ्यः ॥ ९९ अड्गार्ग्यगालवयोः ॥ १०० अदः सर्वेषाम् ॥ ५ ॥ १०१ अतो दीर्घो यञि ॥ १०२ सुपि च ॥ १०३ बहुवचने झल्येत् ॥ १०४ ओसि च ॥ १०५ आङि चापः ॥ १०६ संबुद्धौ च ॥ १०७ अम्बार्थनद्योर्ह्रस्वः ॥ १०८ ह्रस्वस्य गुणः ॥ १०९ जसि च ॥ ११० ऋतो ङिसर्वनामस्थानयोः ॥ १११ घेर्ङिति ॥ ११२ आण्नद्याः ॥ ११३ याडापः ॥ ११४ सर्वनाम्नः स्याड्ढ्रस्वश्च ॥ ११५ विभाषा द्वितीयातृतीयाभ्याम् ॥ ११६ ङेराम्नद्याम्नीभ्यः ॥ ११७ इदुद्भ्याम् ॥ ११८ औत् ॥ ११९ अच्च घेः ॥ १२० आङो नास्त्रियाम् ॥ ६ ॥ "देविका देवतास्फायो भुजमीनातेरतोदीर्घो विंशतिः" ॥

---

## चतुर्थः पादः ॥

१ णौ चङ्युपधाया ह्रस्वः ॥ २ नाग्लोपिशास्वृदिताम् ॥ ३ भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ॥ ४ लोपः पिबतेरीच्चाभ्यासस्य ॥ ५ तिष्ठतेरित् ॥ ६ जिघ्रतेर्वा ॥ ७ उरृत् ॥ ८ नित्यं छन्दसि ॥ ९ दयतेर्दिगि लिटि ॥ १० ऋतश्च संयोगादेर्गुणः ॥ ११ ऋच्छत्यृताम् ॥ शृदृप्रां ह्रस्वो वा ॥ १३ केऽणः ॥ १४ न कपि ॥ १५ आपोऽन्यतरस्याम् ॥ १६ ऋदृशोऽङि गुणः ॥ १७ अस्यतेस्थुक् ॥ १८ श्वयतेरः ॥ १९ पतः पुम् २० वच उम् ॥१॥ २१ शीङः सार्वधातुके गुणः ॥ २२ अयङ्यि क्ङिति ॥ उपसर्गाद्ध्रस्व ऊहतेः ॥ २४ एतेर्लिङि ॥ २५ अकृत्सार्वधातुकयोर्दीर्घः ॥ २६ च्वौ च ॥ २७ रीङृतः ॥ २८ रिङ् शयग्लिङ्क्षु ॥ २९ गुणोऽर्तिसंयोगाद्योः ॥ ३० यङि च ॥ ३१ ई घ्राध्मोः ॥ ३२ अस्य च्वौ ॥ ३३ क्यचि च ॥ ३४ अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु ॥ ३५ न छन्दस्यपुत्रस्य ॥ ३६ दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति ॥ ३७ अश्वाघस्यात् ॥ ३८ देवसुम्नयोर्यजुषि काठके ॥ ३९ कव्यध्वरपृतनस्यर्चि लोपः ॥ ४० द्यतिस्यतिमास्थामित्ति किति ॥ २ ॥ ४१ शाच्छोरन्यतरस्याम् ॥ ४२ दधातेर्हिः ॥ ४३ जहातेश्च क्त्वि ॥ ४४ विभाषा छन्दसि ॥ ४५ सुधित वसुधित नेमधित धिष्व धिषीय च ॥ ४६ दोदद्घोः ॥ ४७ अच उपसर्गात्तः ॥ ४८ अपो भि ॥ ४९ सः स्यार्धधातुके ॥ ५० तासस्त्योर्लोपः ॥ ५१ रि च ॥ ५२ ह एति ॥ ५३ यीवर्णयोर्दीधीवेव्योः ॥ ५४ सनि मीमाघुरभलभशकपतपदामच इस् ॥ ५५ आप्ज्ञप्यृधामीत् ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

५६ दम्भ इच्च ॥ ५७ मुचोऽकर्मकस्य गुणो वा ॥ ५८ अत्र लोपोऽभ्यासस्य ॥ ५९ ह्रस्वः ॥ ६० हलादिः शेषः ॥ ३ ॥ ६१ शर्पूर्वाः खयः ॥ ६२ कुहोश्चुः ॥ ६३ न कवतेर्यङि ॥ ६४ कृषेश्छन्दसि ॥ ६५ दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतः सरीसृपतंवरीवृजन्मर्मृज्यागनीगन्तीति च ॥ ६६ उरत् ॥ ६७ द्युतिस्वाप्योः संप्रसारणम् ॥ ६८ व्यथो लिटि ॥ ६९ दीर्घ इणः किति ॥ ७० अत आदेः ॥ ७१ तस्मान्नुड्द्विहलः ॥ ७२ अश्नोतेश्च ॥ ७३ भवतेरः ॥ ७४ ससूवेति निगमे ॥ ७५ निजां त्रयाणां गुणः श्लौ ॥ ७६ भृञामित् ॥ ७७ अर्तिपिपर्त्योश्च ॥ ७८ बहुलं छन्दसि ॥ ७९ सन्यतः ॥ ८० ओः पुयण्ज्यपरे ॥ ४ ॥ ८१ स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ॥ ८२ गुणो यङ्लुकोः ॥ ८३ दीर्घोऽकितः ॥ ८४ नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् ॥ ८५ नुगतोऽनुनासिकान्तस्य ॥ ८६ जपजभदहदशभञ्जपशां च ॥ ८७ चरफलोश्च ॥ ८८ उत्परस्यातः ॥ ८९ ति च ॥ ९० रीगृदुपधस्य च ॥ ९१ रुग्रिकौ च लुकि ॥ ९२ ऋतश्च ॥ ९३ सन्वल्लघुनि चङ्परेऽनग्लोपे ॥ ९४ दीर्घो लघोः ॥ ९५ अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम् ॥ ९६ विभाषा वेष्टिचेष्ट्योः ॥ ९७ ई च गणः ॥ "णौशीङः शाच्छोः शर्पूर्वाः स्रवतिसप्तदश" ॥ इतिसप्तमोऽध्यायः ॥

---

# अष्टमोऽध्यायः ।

## प्रथमः पादः ।

१ सर्वस्य द्वे ॥ २ तस्य परमाम्रेडितम् ॥ ३ अनुदात्तं च ॥ ४ नित्यवीप्सयोः ॥ ५ परेर्वर्जने ॥ ६ प्रसमुपोदः पादपूरणे ॥ ७ उपर्यध्यधसः सामीप्ये ॥ ८ वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु ॥ ९ एकं बहुव्रीहिवत् ॥ १० आबाधे च ॥ ११ कर्मधारयवदुत्तरेषु ॥ १२ प्रकारे गुणवचनस्य ॥ १३ अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् ॥ १४ यथास्वे यथायथम् ॥ १५ द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ॥ १६ पदस्य ॥ १७ पदात् ॥ १८ अनुदात्तं सर्वमपादादौ ॥ १९ आमन्त्रितस्य च ॥ २० युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ ॥ १ ॥ २१ बहुवचनस्य वस्नसौ ॥ २२ तेमयावेकवचनस्य ॥ २३ त्वामौ द्वितीयायाः ॥ २४ न चवाहाहैवयुक्ते ॥ २५ पश्यार्थैश्चानालोचने ॥ २६ सपूर्वायाः प्रथमाया विभाषा ॥ २७ तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ॥ २८ तिङ्ङतिङः ॥ २९ न लुट् ॥ ३० निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् ॥ ३१ नह प्रत्यारम्भे ॥ ३२ सत्यं प्रश्ने ॥ ३३ अङ्गाप्रातिलोम्ये ॥ ३४ हि च ॥ ३५ छन्दस्यनेकमपि साकाङ्क्षम् ॥ ३६ यावद्यथाभ्याम् ॥ ३७ पूजायां नानन्तरम् ॥ ३८ उपसर्गव्यपेतं च ॥ ३९ तुपश्यपश्यताहैः पूजायाम् ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

४० अहो च ॥ २ ॥ ४१ शेषे विभाषा ॥ ४२ पुरा च परीप्सायाम् ॥ ४३ नन्वित्यनुज्ञैषणायाम् ॥ ४४ किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम् ॥ ४५ लोपे विभाषा ॥ ४६ एहि मन्ये प्रहासे ऌट् ॥ ४७ जात्वपूर्वम् ॥ ४८ किंवृत्तं च चिदुत्तरम् ॥ ४९ आहो उताहो चानन्तरम् ॥ ५० शेषे विभाषा ॥ ५१ गत्यर्थलोटा ऌण्न चेत्कारकं सर्वान्यत् ॥ ५२ लोट् च ॥ ५३ विभाषितं सोपसर्गमनुत्तमम् ॥ ५४ हन्त च ॥ ५५ आम एकान्तरमामन्त्रितमनन्तिके ॥ ५६ यद्धितुपरं छन्दसि ॥ ५७ चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः ॥ ५८ चादिषु च ॥ ५९ चवायोगे प्रथमा ॥ ६० हेति क्षियायाम् ॥ ३ ॥ ६१ अहेति विनियोगे च ॥ ६२ चाहलोप एवेत्यवधारणम् ॥ ६३ चादिलोपे विभाषा ॥ ६४ वैवावेति च च्छन्दसि ॥ ६५ एकान्याभ्यां समर्थाभ्याम् ॥ ६६ यद्वृत्तान्नित्यम् ॥ ६७ पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः ॥ ६८ सगतिरपि तिङ् ॥ ६९ कुत्सने च सुप्यगोत्रादौ ॥ ७० गतिर्गतौ ॥ ७१ तिङि चोदात्तवति ॥ ७२ आमन्त्रितं पूर्वमविद्यमानवत् ॥ ७३ नामन्त्रिते समानाधिकरणे सामान्यवचनम् ॥ ७४ विभाषितं विशेषवचने बहुवचनम् ॥ "सर्वस्यबहुवचनस्य शेषेऽहेतिचतुर्दश" ॥

---

## द्वितीयः पादः ।

१ पूर्वत्रासिद्धम् ॥ २ नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ॥ ३ न मु ने ॥ ४ उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ॥ ५ एकादेश उदात्तेनोदात्तः ॥ ६ स्वरितो वानुदात्ते पदादौ ॥ ७ नलोपः प्रातिपदिकान्तस्य ॥ ८ ॥ न ङिसंबुद्ध्योः ॥ ९ मादुपधायाश्च मतोर्वोऽयवादिभ्यः ॥ १० झयः ॥ ११ संज्ञायाम् ॥ १२ आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती ॥ १३ उदन्वानुदधौ च ॥ १४ राजन्वान्सौराज्ये ॥ १५ छन्दसीरः ॥ १६ अनो नुट् ॥ १७ नाद्धस्य १८ कृपो रो लः ॥ १९ उपसर्गस्यायतौ ॥ २० ग्रो यङि ॥ १ २१ अचि विभाषा ॥ २२ परेश्च घाङ्कयोः ॥ २३ संयोगान्तस्य लोपः ॥ २४ रात्सस्य ॥ २५ धि च ॥ २६ झलो झलि ॥ २७ ह्रस्वादङ्गात् ॥ २८ इट ईटि ॥ २९ स्कोः संयोगाद्योरन्ते च ॥ ३० चोः कुः ॥ ३१ हो ढः ॥ ३२ दादेर्धातोर्घः ॥ ३३ वा द्रुहमुहष्णुहष्णिहाम् ॥ ३४ नहो धः ॥ ३५ आहस्थः ॥ ३६ व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ॥ ३७ एकाचो बशो भष्झषन्तस्य स्ध्वोः ॥ ३८ दधस्तथोश्च ॥ ३९ झलां जशोऽन्ते ॥ ४० झषस्तथोर्धोऽधः ॥ २ ॥ ४१ षढोः कः सि ॥ ४२ रदाभ्यां निष्ठातो नः पूर्वस्य च दः ॥ ४३ संयोगादेरातो धातोर्यण्वतः ॥ ४४ ल्वादिभ्यः ॥ ४५ ओदितश्च ॥ ४६ क्षियो दीर्घात् ॥ ४७ श्योऽस्पर्शे ॥ ४८ अञ्चोऽनपादाने ॥ ४९ दिवोऽविजिगीषायाम् ॥ ५० निर्वाणोऽवाते ॥ ५१ शुषः कः ॥ ५२ पचो वः ॥ ५३ क्षायो मः ॥ ५४ प्रस्त्योऽन्यतरस्याम् ॥ ५५ अनुपसर्गात्फुल्ल-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

क्षीबकृशोल्लाघाः ॥ ५६ नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ॥ ५७ न ध्याख्यापृमूर्छिमदाम् ॥ ५८ वित्तो भोगप्रत्ययोः ॥ ५९ भित्तं शकलम् ॥ ६० ऋणमाधमर्ण्ये ॥ ३ ॥ ६१ नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि च्छन्दसि ॥ ६२ क्विन्प्रत्ययस्य कुः ॥ ६३ नशेर्वा ॥ ६४ मो नो धातोः ॥ ६५ म्वोश्च ॥ ६६ ससजुषो रुः ॥ ६७ अवयाः श्वेतवाः पुरोडाश्च ॥ ६८ अहन् ॥ ६९ रोऽसुपि ॥ ७० अम्नरूधरवरित्युभयथा छन्दसि ॥ ७१ भुवश्च महाव्याहृतेः ॥ ७२ वसुस्रंसुध्वंस्वनडुहां दः ॥ ७३ तिप्यनस्तेः ॥ ७४ सिपि धातो रुर्वा ॥ ७५ दश्च ॥ ७६ र्वोरुपधाया दीर्घ इकः ॥ ७७ हलि च ॥ ७८ उपधायां च ॥ ७९ नभकुर्छुराम् ॥ ८० अदसोऽसेर्दादु दो मः ॥ ४ ॥ ८१ एत ईद्बहुवचने ॥ ८२ वाक्यस्य टेः प्लुत उदात्तः ॥ ८३ ॥ प्रत्यभिवादेऽशूद्रे ॥ ८४ दूराद्धूते च ॥ ८४ हैहेप्रयोगे हैहयोः ॥ ८६ गुरोरनृतोनन्त्यस्याप्येकैकस्य प्राचाम् ॥ ८७ ओमभ्यादाने ॥ ८८ ये यज्ञकर्मणि ॥ ८९ प्रणवष्टेः ॥ ९० याज्यान्तः ॥ ९१ ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः ॥ ९२ अग्नीत्प्रेषणे परस्य च ॥ ९३ विभाषा पृष्टप्रतिवचने हेः ॥ ९४ निगृह्यानुयोगे च ॥ ९५ आम्रेडितं भर्त्सने ॥ ९६ अङ्गयुक्तं तिङाकाङ्क्षम् ॥ ९७ विचार्यमाणानाम् ॥ ९८ पूर्वं तु भाषायाम् ॥ ९९ प्रतिश्रवणे च ॥ १०० अनुदात्तं प्रश्नान्ताभिपूजितयोः ॥ ५ ॥ १०१ चिदिति चोपमार्थे प्रयुज्यमाने ॥ १०२ उपरिस्विदासीदिति च ॥ १०३ स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु ॥ १०४ क्षियाशीःप्रेषेषु तिङाकाङ्क्षम् ॥ १०५ अनन्त्यस्यापि प्रश्नाख्यानयोः ॥ १०६ प्लुतावैच इदुतौ ॥ १०७ एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ ॥ १०८ तयोर्य्वावचि संहितायाम् ॥ "पूर्वत्राचिषढोर्नसत्तैतईच्चिदित्यष्टौ" ॥

---

## तृतीयः पादः ॥

१ मतुवसो रु संबुद्धौ छन्दसि ॥ २ अत्रानुनासिकः पूर्वस्य तु वा ॥ ३ आतोऽटि नित्यम् ॥ ४ अनुनासिकात्परोऽनुस्वारः ॥ ५ समः सुटि ॥ ६ पुमः खय्यम्परे ॥ ७ नश्छव्यप्रशान् ॥ ८ उभयथर्क्षु ॥ ९ दीर्घादटि समानपादे ॥ १० नॄन्पे ॥ ११ स्वतवान्पायौ ॥ १२ कानाम्रेडिते ॥ १३ ढो ढे लोपः ॥ १४ रो रि ॥ १५ खरवसानयोर्विसर्जनीयः ॥ १६ रोः सुपि ॥ १७ भोभगोअघोअपूर्वस्य योऽशि ॥ १८ व्योर्लघुप्रयत्नतरः शाकटायनस्य ॥ १९ लोपः शाकल्यस्य ॥ २० ओतो गार्ग्यस्य ॥१॥ २१ उञि च पदे ॥ २२ हलि सर्वेषाम् ॥ २३ मोऽनुस्वारः ॥ २४ नश्चापदान्तस्य झलि ॥ २५ मो राजि समः क्वौ ॥ २६ हे मपरे वा ॥ २७ नपरे नः ॥ २८ ङ्णोः कुक्टुक्शरि ॥ २९ डः सि धुट् ॥ ३० नश्च ॥ ३१ शि तुक् ॥ ३२ ङमो ह्रस्वादचि ङमुण्नित्यम् ॥ ३३ मय उञो

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वो वा ॥ ३४ विसर्जनीयस्य सः ॥ ३५ शर्परे विसर्जनीयः ॥ ३६ वा शरि ॥ ३७ कुप्वोः ≍क ≍पौ च ॥ ३८ सोऽपदादौ ॥ ३९ इणः षः ॥ ४० नमस्पुरसोर्गत्योः ॥२॥ ४१ इदुदुपधस्य चाप्रत्ययस्य ॥ ४२ तिरसोऽन्यतरस्याम् ॥ ४३ द्विस्त्रिश्चतुरिति कृत्वोर्थे ॥ ४४ इसुसोः सामर्थ्ये ॥ ४५ नित्यं समासेऽनुत्तरपदस्थस्य ॥ ४६ अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ॥ ४७ अधःशिरसी पदे ॥ ४८ कस्कादिषु च ॥ ४९ छन्दसि वाप्राम्रेडितयोः ॥ ५० कःकरत्करतिकृधिकृतेष्वनदितेः ॥ ५१ पञ्चम्याः परावध्यर्थे ॥ ५२ पातौ च बहुलम् ॥ ५३ षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु ॥ ५४ इडाया वा ॥ ५५ अपदान्तस्य मूर्धन्यः ॥ ५६ सहेः साडः सः ॥ ५७ इण्कोः ॥ ५८ नुम्विसर्जनीयशर्व्यवायेऽपि ॥ ५९ आदेशप्रत्यययोः ॥ ६० शासिवसिघसीनां च ॥३॥ ६१ स्तौतिण्योरेव षण्यभ्यासात् ॥ ६२ सः स्विदिस्वदिसहीनां च ॥ ६३ प्राक्सितादड्व्यवायेऽपि ॥ ६४ स्थादिष्वभ्यासेन चाभ्यासस्य ॥ ६५ उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् ॥ ६६ सदिरप्रतेः ॥ ६७ स्तन्भेः ॥ ६८ अवाच्चालम्बनाविदूर्ययोः ॥ ६९ वेश्च स्वनो भोजने ॥ ७० परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् ॥ ७१ सिवादीनां वाड्व्यवायेऽपि ॥ ७२ अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु ॥ ७३ वेः स्कन्देरनिष्ठायाम् ॥ ७४ परेश्च ॥ ७५ परिस्कन्दः प्राच्यभरतेषु ॥ ७६ स्फुरतिस्फुलत्योर्निर्निविभ्यः ॥ ७७ वेः स्कभ्नातेर्नित्यम् ॥ ७८ इणः षीध्वं लुङ्लिटां धोऽङ्गात् ॥ ७९ विभाषेटः ॥ ८० समासेऽङ्गुलेः सङ्गः ॥ ४ ॥ ८१ भीरोः स्थानम् ॥ ८२ अग्नेः स्तुत्स्तोमसोमाः ॥ ८३ ज्योतिरायुषः स्तोमः ॥ ८४ मातृपितृभ्यां स्वसा ॥ ८५ मातुःपितुर्भ्यामन्यतरस्याम् ॥ ८६ अभिनिसः स्तनः शब्दसंज्ञायाम् ॥ ८७ उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ॥ ८८ सुविनिर्दुर्भ्यः सुपिसूतिसमाः ॥ ८९ निनदीभ्यां स्नातेः कौशले ॥ ९० सूत्रं प्रतिष्णातम् ॥ ९१ कपिष्ठलो गोत्रे ॥ ९२ प्रष्ठोऽग्रगामिनि ॥ ९३ वृक्षासनयोर्विष्टरः ॥ ९४ छन्दोनाम्नि च ॥ ९५ गवियुधिभ्यां स्थिरः ॥ ९६ विकुशमिपरिभ्यः स्थलम् ॥ ९७ अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्कङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः ॥ ९८ सुषामादिषु च ९९ एति संज्ञायामगात् ॥ ११० नक्षत्राद्वा ॥ ५ ॥ १०१ ह्रस्वात्तादौ तद्धिते ॥ १०२ निसस्तपतावनासेवने ॥ १०३ युष्मत्तत्ततक्षुःष्वन्तः पादम् ॥ १०४ यजुष्येकेषाम् ॥ १०५ स्तुतस्तोमयोश्छन्दसि ॥ १०६ पूर्वपदात् ॥ १०७ सुञः ॥ १०८ सनोतेरनः ॥ १०९ सहेः पृतनर्ताभ्यां च ॥ ११० न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् ॥ १११ सात्पदाद्योः ॥ ११२ सिचो यङि ॥ ११३ सेधतेर्गतौ ॥ ११४ प्रतिस्तब्धनिस्तब्धौ च ॥ ११५ सोढः ॥ ११६ स्तम्भुसिवुसहां चङि ॥ ११७ सुनोतेः स्यसनोः ॥ ११८ सदेः परस्य लिटि ॥ ११९ निव्यभिभ्योऽड्व्यवाये वा छन्दसि ॥ मतुवसोरुस्त्रिचेदुदुपधस्य स्तौतिण्योर्भीरोर्ह्रस्वात्तादावेकोनविंशतिः" ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

## चतुर्थः पादः ।

१ रषाभ्यां नो णः समानपदे ॥ २ अट्कुप्वाङ्नुम्व्यवायेऽपि ॥ ३ पूर्वपदात्संज्ञायामगः ॥ ४ वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः ॥ ५ प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि ॥ ६ विभाषौषधिवनस्पतिभ्यः ॥ ७ अह्नोऽदन्तात् ॥ ८ वाहनमाहितात् ॥ ९ पानं देशे ॥ १० वा भावकरणयोः ॥ ११ प्रातिपदिकान्तनुम्विभक्तिषु च ॥ १२ एकाजुत्तरपदे णः ॥ १३ कुमति च ॥ १४ उपसर्गादसमासेऽपि णोपदेशस्य ॥ १५ हिनु मीना ॥ १६ आनि लोट् ॥ १७ नेर्गदनदपतपदघुमास्यतिहन्तिवातियातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ॥ १८ शेषे विभाषाकखादावषान्त उपदेशे ॥ १९ अनितेः ॥ २० अन्तः ॥ १ ॥ २१ उभौ साभ्यासस्य ॥ २२ हन्तेरत्पूर्वस्य ॥ २३ वमोर्वा ॥ २४ अन्तरदेशे ॥ २५ अयनं च ॥ २६ छन्दस्यृदवग्रहात् ॥ २७ नश्च धातुस्थोरुषुभ्यः ॥ २८ उपसर्गाद्बहुलम् ॥ २९ कृत्यचः ॥ ३० णेर्विभाषा ॥ ३१ हलश्चेजुपधात् ॥ ३२ इजादेः सनुमः ॥ ३३ वा निंसनिक्षनिन्दाम् ॥ ३४ न भाभूपूकमिगमिप्यायीवेपाम् ॥ ३५ षात्पदान्तात् ॥ ३६ नशेः षान्तस्य ॥ ३७ पदान्तस्य ॥ ३८ पदव्यवायेऽपि ॥ ३९ क्षुभ्नादिषु च ॥ ४० स्तोः श्चुना श्चुः ॥ २ ॥ ४१ ष्टुना ष्टुः ॥ ४२ न पदान्ताट्टोरनाम् ॥ ४३ तोः षि ॥ ४४ शात् ॥ ४५ यरोऽनुनासिकेऽनुनासिको वा ॥ ४६ अचो रहाभ्यां द्वे ॥ ४७ अनचि च ॥ ४८ नादिन्याक्रोशे पुत्रस्य ॥ ४९ शरोऽचि ॥ ५० त्रिप्रभृतिषु शाकटायनस्य ॥ ५१ सर्वत्र शाकल्यस्य ॥ ५२ दीर्घादाचार्याणाम् ॥ ५३ झलां जश् झशि ॥ ५४ अभ्यासे चर्च ॥ ५५ खरि च ॥ ५६ वावसाने ॥ ५७ अणोऽप्रगृह्यस्यानुनासिकः ॥ ५८ अनुस्वारस्य ययि परसवर्णः ॥ ५९ वा पदान्तस्य ॥ ६० तोर्लि ॥ ३ ॥ ६१ उदः स्थास्तम्भोः पूर्वस्य ॥ ६२ झयो होऽन्यतरस्याम् ॥ ६३ शश्छोऽटि ॥ ६४ हलो यमां यमि लोपः ॥ ६५ झरो झरि सवर्णे ॥ ६६ उदात्तादनुदात्तस्य स्वरितः ॥ ६७ नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् ॥ ६८ अ अ इति ॥ "रषाभ्यामुभौष्टुनोदः स्थाष्टौ" ॥ इत्यष्टमोऽध्यायः ॥

**इत्यष्टाध्यायीसूत्रपाठः समाप्तः ॥**

---

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

# अथ गणपाठः ।

## प्रथमोऽध्यायः ।

**सर्वादीनि सर्वनामानि** १ । १ । २७ ॥ सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्याम् । अन्तरं बहिर्योगोपसंव्यानयोः । त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् ॥ **इति सर्वादिः** ॥ १ ॥

**स्वरादिनिपातमव्ययम्**।१।१।३७॥ स्वर् अन्तर् प्रातर् । **अन्तोदात्ताः** । पुनर् सनुतर् उच्चैस् नीचैस् शनैस् ऋधक् ऋते युगपत् आरात् [ अन्तिकात् ] पृथक् । **आद्युदात्ताः** ह्यस् श्वस् दिवा रात्रौ सायम् चिरम् मनाक् ईषत् [ शश्वत् ] जोषम् तूष्णीम् बहिस् [ अधस् ] अवस् समया निकषा स्वयम् मृषा नक्तम् नञ् हेतौ [ हे है ] इद्धा अद्धा सामि । **अन्तोदात्ताः** । वत् [ ५।१।११५ ] ब्राह्मणवत् क्षत्रियवत् सना सनत् सनात् उपधा तिरस् । **आद्युदात्ताः** । अन्तरा । **अन्तोदात्तः** । अन्तरेण [मक्] ज्योक् [ योक् नक् ] कम् शम् सहसा [ श्रद्धा ] अलम् स्वधा वषट् विना नाना स्वस्ति अन्यत् अस्ति उपांशु क्षमा विहायसा दोषा मुधा दिष्ट्या वृथा मिथ्या । क्त्वातोसुन्कसुनः । कृन्मकारसंध्यक्षरान्तोऽव्ययीभावश्च । पुरा मिथो मिथस् प्रायस् मुहुस् प्रवाहुकम् प्रवाहिका आर्यहलम् अभीक्ष्णम् साकम् सार्धम् [ सत्रम् समम् ] नमस् हिरुक् । तसिलादयस्तद्धिता एधाच्पर्यन्ताः [ ५ । ३ । ७–४६ ] शस्तसी कृत्वसुच् सुच् आस्थालौ । च्व्यर्थाश्च । [अथ] अम् आम् प्रताम् प्रतान् प्रशान् । **आकृतिगणोऽयम्** । तेनान्येपि । तथाहि । माङ् श्रम् कामम् [ प्रकामम् ] भूयस् परम् साक्षात् साचि ( सावि ) सत्यम् मंक्षु संवत् अवश्यम् सपदि प्रादुस् आविस् अनिशम् नित्यम् नित्यदा सदा अजस्रम् संततम् उषा ओम् भूर् भुवर् झटिति तरसा सुष्ठु कु अञ्जसा अ मिथु ( अमिथु ) विथक् भाजक् अन्वक् चिराय चिरम् चिररात्राय चिरस्य चिरेण चिरात् अस्तम् आनुषक् अनुषक् अनुषट् अम्नस् ( अम्भस् ) अम्नर् ( अम्भर् ) स्थाने वरम् दुष्ठु बलात् शु अर्वाक् शुदि वदि इत्यादि । तसिलादयः प्राक्पाशपः [ ६ । ३ । ३६ ] । शस्प्रभृतयः प्राक्समासान्तेभ्यः [ ५ । ४ । ४३–६८ ] मान्तः कृत्वोर्थः । तसिवती । नानाञाविति ॥ **इति स्वरादिः** ॥ २ ॥

**चादयोऽसत्वे** १ । ४ । ५७ ॥ च वा ह अह एव एवम् नूनम् शश्वत् युगपत् भूयस् सूपत् कूपत् कुवित् नेत् चेत् चण् कच्चित् यत्र तत्र नह हन्त माकिम् माकीम् माकिर् नकिम् नकीम् नकिर् आकीम् माङ् नञ् तावत् यावत् त्वा

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

त्वै त्वै द्वै रै [ रे ] श्रौषट् वौषट् स्वाहा स्वधा ओम् तथा तथाहि खलु किल अथ सुष्ठु स्म अ इ उ ऋ ऌ ए ऐ ओ औ आदह उञ् उकञ् वेलायाम् मात्रायाम् यथा यत् तत् किम् पुरा वधा ( वध्वा ) धिक् हाहा हेहै ( हहे ) पाट् प्याट् आहो उताहो हो अहो नो (नौ ) अथो ननु मन्ये मिथ्या असि ब्रूहि तु नु इति इव वत् वात् वन बत [ सम् वशम् शिकम् दिकम् ] सनुकम् छंवट् ( छंबट् ) शङ्के शुकम् खम् सनात् सनतर् नहिकम् सत्यम् ऋतम् अद्धा इद्धा नोचेत् नचेत् नहि जातु कथम् कुतः कुत्र अव अनु हा हे [ है ] आहोस्वित् शम् कम् खम् दिष्ट्या पशु वट् सह [ आनुषट् ] आनुषक् अङ्ग फट् ताजक् भाजक् अये अरे वाट् ( चाटु ) कुम् खुम् घुम् अम् ईम् सीम् सिम् सि वै । उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाताः । **आकृतिगणोऽयम्** ॥ **इति चादयः** ॥ ३ ॥

**प्रादयः** १ । ४ । ५४ ॥ प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अति सु उद् अभि प्रति परि उप ॥ **इति प्रादयः** ॥ ४ ॥

**ऊर्यादि च्विडाचश्च** १।४।६१॥ ऊरी उररी तन्थी ताली आताली वेताली धूली धूसी शकला शंसकला ध्वंसकला भ्रंसकला गुलगुधा सजूस् फल फली विक्ली आक्ली आलोष्ठी केवाली केवासी सेवासी पर्याली शेवाली वर्षाली अत्यूमशा वश्मसा मस्मसा मसमसा औषट् श्रौषट् वौषट् वषट् स्वाहा स्वधा पांपी प्रादुस् श्रत् आविस् । **इत्यूर्यादयः** ॥ ५ ॥

**साक्षात्प्रभृतीनि च** १ । ४ । ७४ ॥ साक्षात् मिथ्या चिन्ता भद्रा रोचना आस्था अमा अद्धा प्राजर्या प्राजरुहा बीजर्या बीजरुहा संसर्या अर्थे लवणम् उष्णम् शीतम् उदकम् आर्द्रम् अग्नौ वशे कविसने विहसने प्रतपने प्रादुस् नमस् । **आकृतिगणोऽयम्** ॥ **इति साक्षात्प्रभृतयः** ॥ ६ ॥

---

## द्वितीयोऽध्यायः ।

**तिष्ठद्गुप्रभृतीनि च** २ । १ । १७॥ तिष्ठद्गु वहद्गु आयतीगवम् खलेयवम् खलेबुसम् लूनयवम् लूयमानयवम् पूतयवम् पूयमानयवम् संहृतयवम् संह्रियमाणयवम् संहृतबुसम् संह्रियमाणबुसम् समभूमि समपदाति सुषमम् विषमम् दुःषमम् निःषमम् अपसमम् आयतीसमम् [ प्रोढम् ] पापसमम् पुण्यसमम् प्राह्णम् प्ररथम् प्रमृगम् प्रदक्षिणम् [ अपरदक्षिणम् ] संप्रति असंप्रति । इच्प्रत्ययः समासान्तः । [ ५ । ४ । १२७ ॥ ५ । ४ । १२८ ] ॥ **इति तिष्ठद्गुप्रभृतयः** ॥ १ ॥

**सप्तमी शौण्डैः** २ । १ । ४० ॥ शौण्ड धूर्त कितव व्याड प्रवीण संवीत अन्तर अधि पटु पण्डित कुशल चपल निपुण ॥ **इति शौण्डादयः** ॥ २ ॥

**पात्रेसमितादयश्च** २ । १ । ४८ ॥ पात्रेसमिताः पात्रेबहुलाः उदुम्बरमशकः उदु-

 CC.0- Jangamwadi Math Collection. Digitized by eGangotri

म्बरकूर्मिः कूपकच्छपः अवटकच्छपः कूपमण्डूकः कुम्भमण्डूकः उदपानमण्डूकः नगरकाकः नगरवायसः मातरिपुरुषः पिण्डीशूरः पितरिशूरः गेहेशूरः गेहेनर्दी गेहेक्ष्वेडी गेहेविजिती मेहेव्याडः गेहेमेही गेहेदाही गेहेदृप्तः गेहेधृष्टः गर्भेतृप्तः आखनिकबकः गोष्ठेशूरः गोष्ठेविजिती गोष्ठेक्ष्वेडी गोष्ठेपटुः गोष्ठेपण्डितः गोष्ठेप्रगल्भः कर्णेटिरिटिरा कर्णेचुरुचुरा । **आकृतिगणोऽयम् ॥ इति पात्रेसमितादयः ॥ ३ ॥**

**उपमितं व्याघ्रादिभिः सामान्याप्रयोगे** २।१।५६॥ व्याघ्र सिंह ऋक्ष ऋषभ चन्दन वृक वृष वराह हस्तिम् तरु कुञ्जर रुरु पृषत् पुण्डरीक पलाश कितव ॥ **इति व्याघ्रादयः ॥ ४ ॥ आकृतिगणोऽयम्** तेन मुखपद्मम् मुखकमलम् करकिसलयम् पार्थिवचन्द्रः इत्यादि ॥ ४ ॥

**श्रेण्यादयः कृतादिभिः** २ । १ । ५९ ॥ १ श्रेणि एक पूग मुकुन्द राशि निचय विषय निधन पर इन्द्र देव मुण्ड भूत श्रमण वदान्य अध्यापक अभिरूपक ब्राह्मण क्षत्रिय [ विशिष्ट ] पटु पण्डित कुशल चपल निपुण कृपण ॥ **इत्येते श्रेण्यादयः ॥ ५ ॥**

२ कृत मित मत भूत उक्त [ युक्त ] समाज्ञात समाम्नात समाख्यात संभावित [ संसेवित अवधारित अयकल्पित निराकृत उपकृत उपाकृत [ **दृष्ट** कलित दलित उदाहृत विश्रुत उदित ] । आकृतिगणोऽयम् ॥ **इति कृतादिः ॥ ६ ॥**

*** शाकपार्थिवादीनामुपसंख्यानम्** *२।१।६०॥ शाकपार्थिव कुतपसौश्रुत अजातौल्वलि । **आकृतिगणोऽयम्** । कृतापकृत भुक्तविभुक्त पीतविपीत गतप्रत्यागत यातानुयात क्रयाक्रयिका पुटापुटिका फलाफलिका मानोन्मानिका ॥ **इति शाकपार्थिवादिः ॥ ७ ॥**

**कुमारः श्रमणादिभिः** ३ । १ । ७० ॥ श्रमणा प्रव्रजिता कुलटा गर्भिणी तापसी दासी बन्धकी अध्यापक अभिरूपक पण्डित पटु मृदु कुशल चपल निपुण ॥ **इति श्रमणादयः ॥ ८ ॥**

**मयूरव्यंसकादयश्च** २ । १ । ७२ ॥ मयूरव्यंसक छात्रव्यंसक कम्बोजमुण्ड यवनमुण्ड । छन्दसि । हस्तेगृह्य ( हस्तगृह्य ) पादेगृह्य (पादगृह्य) लाङ्गूलेगृह्य ( लाङ्गूलगृह्य ) पुनर्दाय । एहीडादयोऽन्यपदार्थे । एहीडं एहियवं व एहिवाणिजा क्रिया अपेहिवाणिजा प्रेहिवाणिजा एहिस्वागता अपेहिस्वागता एहिद्वितीया अपेहिद्वितीया प्रेहिद्वितीया एहिकटा अपेहिकटा प्रेहिकटा आहरकरटा प्रेहिकर्दमा प्रोहकर्दमा विधमचूडा उद्धमचूडा ( उद्धरचूडा ) आहरचेला आहरवसना [ अहरसेना ] आहरवनिता ( आहरविनता ) कृन्तविचक्षणा उद्धरोत्सृजा उद्धरावसृजा उद्धमविधमा उत्पचनिपचा उत्पतनिपता उच्चावचम् उच्चनीचम् आचोपचम् आचपराचम् [ नखप्रचम् ] निश्चप्रचम् अकिंचन स्नात्वाकालक पीत्वास्थिरक भुक्त्वासुहित प्रोष्यपापीयान् उत्पत्यपाकला निपत्यरोहिणी निषण्ण-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

श्यांमा अपेहिप्रघसा एहिविघसा इहपञ्चमी इहद्वितीया । जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति । जहिजोडः ( जहिजोडम् ) जहिस्तम्बम् ( जहिस्तम्बः ) [ उज्जहिस्तम्बम् ]। आख्यातमाख्यातेन क्रियासातत्ये । अश्नीतपिबता पचतभृज्जता खादतमोदता खादतवमता ( खादताचमता ) आहरनिवपा आहरनिष्किरा ( आवपनिष्किरा ) उत्पचविपचा भिन्धिलवणा कृन्धिविचक्षणा पचलवणा पचप्रकूटा ॥ **आकृतिगणोऽयम्** ॥ तेन । अकुतोऽभयः कान्दिशीकः ( कान्देशीकः) आहोपुरुषिका अहमहमिका यदृच्छा एहिरेयाहिरा उन्मृजावमृजा द्रव्यान्तरम् आवश्यकार्यम् ॥ **इत्यादिमयूरव्यंसकादयः** ॥ ९ ॥

७१ **याजकादिभिश्च** २।२।९ ॥ याजक पूजक परिचारक परिवेषक (परिषेचक) स्नापक अध्यापक उत्साहक उद्वर्तक होतृ भर्तृ रथगणक पत्तिगणक ॥ **इति याजकादयः** ॥ १० ॥

९१ **राजदन्तादिषु परम्** ।२।२।३१॥ राजदन्तः अग्रेवणम् लिप्तवासितम् नग्नमुषितम् सिक्तसंमृष्टम् मृष्टलुञ्चितम् अवक्लिन्नपक्कम् अर्पितोतम् (अर्पितोप्तम्) उप्तगाढम् उलूखलमुसलम् तण्डुलकिण्वम् दृषदुपलम् आरड्वायनि ( आरग्वायनबन्धकी ) चित्ररथबाह्लीकम् अवन्त्यश्मकम् शूद्रार्यम् स्नातकराजानौ विष्वक्सेनार्जुनौ अक्षिभ्रुवम् दारगवम् शब्दार्थौ धर्मार्थौ कामार्थौ अर्थशब्दौ अर्थधर्मौ अर्थकामौ वैकारिमतम् गाजवाजम् ( गोजवाजम् ) गोपालिधानपूलासम् ( गोपालधानीपूलासम् ) पूलासकारण्डम् ( पूलासककुरण्डम् ) स्थूलासम् ( स्थूलपूलासम् ) उशीरबीजम् [ जिज्ञास्थि ] सिञ्जास्थम् (सिञ्जाश्वत्थम्) चित्रास्वाती ( चित्रस्वाती ) भार्यापती दंपती जंपती जायापती पुत्रपती पुत्रपशू केशश्मश्रू शिरोबीजु ( शिरोबीजम् ) शिरोजानु सर्पिर्मधुनी मधुसर्पिषी [आद्यन्तौ] अन्तादी गुणवृद्धी वृद्धिगुणौ ॥ **इति राजदन्तादिः** ॥ ११ ॥

९१ **वाहिताग्न्यादिषु** २।२।३७॥ आहिताग्नि जातपुत्र जातदन्त जातश्मश्रु तैलपीत घृतपीत [मद्यपीत] ऊढभार्य गतार्थ ॥ **आकृतिगणोऽयम्** ॥ तेन । गडुकण्ठ अस्युद्यत ( असुद्यत ) दण्डपाणिप्रभृतयोपि ॥ **इत्याहिताग्न्यादयः** ॥ १२ ॥

७६ **कडाराः कर्मधारये** २।२।३८ ॥ कडार गडुल खञ्ज खोड काण कुण्ठ खलति गौर वृद्ध भिक्षुक पिङ्ग पिङ्गुल ( पिङ्गल ) तड तनु [ जठर ] बधिर मठर कञ्ज बर्बर ॥ **इति कडारादयः** ॥ १३ ॥

६१ * **नौकाकान्नशुकशृगालवर्जेषु** * २।३।१७॥ नौ काक अन्न शुक शृगाल॥ **इति नावादयः** ॥ १४ ॥

६९ * **प्रकृत्यादिभ्य उपसंख्यानम्** * २।३।१८ ॥ प्रकृति प्राय गोत्र सम विषम द्विद्रोण पञ्चक साहस्र ॥ **इति प्रकृत्यादयः** ॥ १५ ॥

९२ **गवाश्वप्रभृतीनि च** २।४।११॥ गवाश्वम् गवाविकम् गवैडकम् अजाविकम्

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अजैडकम् ] कुब्जवामनम् कुब्जकिरातम् पुत्रपौत्रम् श्वचण्डालम् स्त्रीकुमारम् दासीमाणवकम् शाटीपटीरम् शाटीप्रच्छदम् शाटीपट्टिकम् उष्ट्रखरम् उष्ट्रशशम् मूत्रशकृत् मूत्रपुरीषम् यकृन्मेदः मांसशोणितम् दर्भशरम् दर्भपूतीकम् अर्जुनशिरीषम् अर्जुनपुरुषम् तृणोपलम् ( तृणोलपम् ) दासीदासम् कुटीकुटम् भागवतीभागवतम् ॥ **इति गवाश्वप्रभृतीनि** ॥ १६ ॥

९३ **न दधिपयआदीनि** २ । ४ । १४ ॥ दधिपयसी सर्पिर्मधुनी मधुसर्पिषी ब्रह्मप्रजापती शिववैश्रवणौ स्कन्दविशाखौ परिव्राजककौशिकौ ( परिव्राट्कौशिकौ ) प्रवर्ग्योपसदौ शुक्लकृष्णौ इध्माबर्हिषी दीक्षातपसी [ श्रद्धातपसी मेधातपसी ] अध्ययनतपसी उलूखलमुसले आद्यवसाने श्रद्धामेधे ऋक्सामे वाङ्मनसे ॥ **इति दधिपयआदीनि** ॥ १७ ॥

८२ **अर्धर्चाः पुंसि च** २ । ४ । ३१ ॥ अर्धर्च गोमय कषाय कार्षापण कुतप कुसप ( कुणप ) कपाट शङ्ख गूथ यूथ ध्वज कबन्ध पद्म गृह सरक कंस दिवस यूष अन्धकार दण्ड कमण्डलु मण्ड भूत द्वीप द्यूत चक्र धर्म कर्मन् मोदक शतमान यान नख नखर चरण पुच्छ दाडिम हिम रजत सक्तु पिधान सार पात्र घृत सैन्धव औषध आढक चषक द्रोण खलीन पात्रीव षष्टिक वारबाण ( वारवारण ) प्रोथ कपित्थ [ शुष्क ] शाल शील शुक्ल ( शुल्क ) शीधु कवच रेणु [ ऋण ] कपट शीकर मुसल सुवर्ण वर्ण पूर्व चमस क्षीर कर्ष आकाश अष्टापद मलङ्ग निधन निर्यास जृम्भ वृत्त पुस्त बुस्त क्ष्वेडित शृङ्ग निगड [ खल ] मूलक मधु मूल स्थूल शराव नाल वप्र विमान मुख प्रग्रीव शूल वज्र कटक कण्टक [ कर्पट ] शिखर कल्क ( वल्कल ) नटमक ( नाटमस्तक ) वलय कुसुम तृण पङ्क कुण्डल किरीट [ कुमुद ] अर्बुद अङ्कुश तिमिर अश्राय भूषण इक्कस ( इष्वास ) मुकुल वसन्त तटाक ( तडाग ) पिटक विटङ्क विडङ्ग पिण्याक माष कोश फलक दिन दैवत पिनाक समर स्थाणु अनीक उपवास शाक कर्पास [ विशाल ] चषाल ( चखाल ) खण्ड दर विटप [ रण बल मक ] मृगाल हस्त आर्द्र हल [ सूत्र ] ताण्डव गाण्डीव मण्डप पटह सौध योध पार्श्व शरीर फल [ छल ] पुर ( पुरा ) राष्ट्र अम्बर बिम्ब कुट्टिम मण्डल (कुक्कुट) कुडप ककुद खण्डल तोमर तोरण मञ्चक पञ्चक पुङ्ख मध्य [ बाल [ छाल वल्मीक वर्ष वस्त्र वसु देह उद्यान उद्योग स्नेह स्तेन [ स्तन स्वर ] संगम निष्क क्षेम शूक क्षत्र पवित्र [ यौवन कलह ] मालक (पालक) मूषिक [ मण्डल वल्कल ] कुज (कुञ्ज) विहार लोहित विषाण भवन अरण्य पुलिन दृढ आसन ऐरावत शूर्प तीर्थ लोमन ( लोमश ) तमाल लोह दण्डक शपथ प्रतिसर दारु धनुस् मान वर्चस्क कूर्च तण्डक मठ सहस्र ओदन प्रवाल शकट अपराह्ण नीड शकल तण्डुल **इत्यर्धर्चादिः** ॥ १८ ॥

१०८ **पैलादिभ्यश्च** २ । ४ । ५९ ॥ पैल शालङ्कि सात्यकि सात्यंकामि राहवि रावणि औदञ्चि औदव्रजि औदमेघि औदव्यज्रि ( औदमज्जि ) औदभृज्जि दैवस्थानि पैङ्गलोदायनि राहक्षति भौलिङ्गि राणि औदन्यि औद्राहमानि औजिहानि-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

औदशुद्धि तद्राजाच्चाण (तद्राज) ॥ **आकृतिगणोऽयम्॥ इति पैलादिः ॥१९॥**

१०८ **न तौल्वलिभ्यः** २।४।६१ ॥ तौल्वलि धारणि पारणि रावणि दैलीपि दैवति वार्कलि नैवति (नैवकि) दैवमित्रि (दैवमति) दैवयज्ञि चाफट्टकि बैल्वकि वैकि (वैङ्कि) आनुहारति (आनुराहति) पौष्करसादि आनुरोहति आनुति प्रादोहनि नैमिश्रि प्राडाहति बान्धकि वैशीति आसिनासि आहिंसि आसुरि नैमिषि आसिबन्धकि पौष्पिकारेणुपालि वैकर्णि वैरकि वैहति ॥ **इति तौल्वल्यादिः ॥ २० ॥**

११४ **यस्कादिभ्यो गोत्रे** २ । ४ । ६३ ॥ यस्क लह्य द्रुह्य अयस्थूण (अयःस्थूण) तृणकर्ण सदामत्त कम्बलहार बहिर्योग कर्णाढक पर्णाढक पिण्डीजङ्घ वकसस्थ (वकसक्थ) विश्रि कुद्रि अजवस्ति मित्रयु रक्षोमुख जङ्घारथ उत्कास कटुक मथक (मन्थक) पुष्करट् (पुष्करसद्) विषपुट उपरिमेखल क्रोष्टुकमान (क्रोष्टुमान) क्रोष्टुपाद क्रोष्टुमाय शीर्षमाय खरप पदक वर्षुक भलन्दन भडिल भण्डिल भडित भण्डिल ॥ **एते यस्कादयः ॥ २१ ॥**

११४ **न गोपवनादिभ्यः** २ । २ । ६७ ॥ गोपवन शैग्रु (शिग्रु) विन्दु भाजन अश्वावतान श्यामाक (श्योमाक) श्यामक श्यापर्ण ॥ **बिदाद्यन्तर्गणोऽयम् (४।१। १०४) इति गोपवनादिः ॥ २२ ॥**

११४ **तिककितवादिभ्यो द्वन्द्वे** ।२।४।६८॥ तिककितवाः वङ्खरभण्डीरथाः उपकलमकाः पफकनरकाः बकनखगुदपरिणद्धाः उब्जककुभाः लङ्कशान्तमुखाः उत्तरशलङ्कटाः कृष्णाजिनकृष्णसुन्दराः भ्रष्टककःपिष्ठलाः अग्निवेशदशेरुकाः॥ **एते तिककितवादयः२३**

११४ **उपकादिभ्योऽन्यतरस्यामद्वन्द्वे** २ । ४ । ६९ ॥ उपक लपक भ्रष्टक कपिष्ठल कृष्णाजिन कृष्णसुन्दर चूडारक आडारक गडुक उदङ्क सुधायुक अबन्धक पिङ्गलक पिष्ट सुपिष्ट (सुपिष्ठ) मयूरकर्ण खरीजङ्घ शलाथल पतञ्जल पदञ्जल कठेरणि कुषीतक कशकृत्स्न (काशकृत्स्न) निदाघ कलशीकण्ठ दामकण्ठ कृष्णपिङ्गल कर्णक पर्णक जटिरक बधिरक जन्तुक अनुलोम अनुपद प्रतिलोम जपजगध प्रतान अनभिहित कमक वराटक लेखाभ्र कमन्दक पिञ्जूल वर्णक मसूरकर्ण मदाघ कवन्तक कमन्तक कदामत दामकण्ठ ॥ **एते उपकादयः ॥ २४ ॥**

---

## तृतीयोऽध्यायः ।

२६९ **भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः** ३ । १ । १२॥ भृश शीघ्र चपल मन्द पण्डित उत्सुक सुमनस् दुर्मनस् अभिमनस् उन्मनस् रहस् रोहत् रेहत् संश्चत् तृपत् शश्वत् भ्रमत् वेहत् शुचिस् शुचिवर्चस् अण्डर वर्चस् ओजस् सुरजस् अरजस् ॥ **एते भृशादयः ॥ १ ॥**

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

२७० **लोहितादिडाज्भ्यः क्यष्** ३ । १ । १३ ॥ लोहित चरित नील फेन मद्र हरित दास मन्द ॥ **लोहितादिराकृतिगणः ॥ २ ॥**

२७० **सुखादिभ्यः कर्तृवेदनायाम्** ३ । १ । १८ ॥ सुख दुःख तृप्त कृच्छ्र अस्र आस्र अलीक प्रतीप करुण कृपण सोढ ॥ **इत्येतानि सुखादीनि ॥ ३ ॥**

२७२ **कण्ड्वादिभ्यो यक्** ३ । १ । २७ ॥ कण्डूञ् मन्तु हृणी वल्गु असु [ मनस् ] महीङ् लाट् लेट् इरस् इरज् इरञ् दुवस् उषस् वेट् मेधा कुषुभ ( नमस् ) मगध तन्तस् पम्पस् ( पपस् ) सुख दुःख [ भिक्ष चरम चरण अवर ] सपर अरर ( अरर् ) भिषज् भिष्णुज् [ अपर आर ] इषुध वरण चुरण तुरण भुरण गद्गद एला केला खेला [ वेला शेला ] लिट् लोट् [ लेखा लेख ] रेखा द्रवस् तिरस् अगद उरस् तरण ( तरिण ) पयस् संभूयस् सम्बर ॥ **आकृतिगणोऽयम् ॥ इति कण्ड्वादिः ॥ ४ ॥**

२९९ **नन्दि[1]ग्रहि[2]पचा[3]दिभ्यो ल्युणिन्यचः** ३ । १ । १३४ ॥ १ नन्दिवाशिमदिदूषिसाधिवर्धिशोभिरोचिभ्यो ण्यन्तेभ्यः संज्ञायाम् । नन्दनः वाशनः मदनः दूषणः साधनः वर्धनः शोभनः रोचनः । सहितपिदमः संज्ञायाम् । गहनः तपनः दमनः जल्पनः रमणः दर्पणः संक्रन्दनः संकर्षणः संहर्षणः जनार्दनः यवनः मधुसूदनः बिभीषणः लवणः चित्तविनाशनः कुलदमनः [ शत्रुदमनः ] **इति नन्द्यादिः ॥ ५ ॥**

ग्राही उत्साही उद्दासी उद्भासी स्थायी मन्त्री संमर्दी । रक्षश्रुवपशां नौ । निरक्षी निश्रावी निवापी निशायी । याचव्याहृव्रजवदवसां प्रतिषिद्धानाम् । अयाची अव्याहारी असंव्याहारी अव्राजी अवादी अवासी । अचामचित्तकर्तृकाणाम् । अकारी अहारी अविनायी [ विशायी विषायी ] विशयी विषयी देशे । विशयी विषयी देशः । अभिभावी भूते । अपराधी उपरोधी परिभवी परिभावी ॥ **इति ग्रहादिः ॥ ६ ॥**

३ पच वच वप वद चल पत नदट् भषट् प्लवट् चरट् गरट् तरट् चोरट् गाहट् सूरट् देवट् [ दोषट् ] जर ( रज ) मर ( मद ) क्षम ( क्षप ) सेव मेष कोप ( कोष ) मेध नर्त व्रण दर्श सर्प [ दम्भ दर्प ] जारभर श्वपच ॥ **पचादिराकृतिगणः ॥ ७ ॥**

२९८ * **कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्** * ३ । २ । ५ ॥ मूलविभुज नखमुच काकगुह कुमुद महीध्र कुध्र गिध्र ॥ **आकृतिगणोऽयम् ॥ इति मूलविभुजादयः ॥ ८ ॥**

२९८ * **पार्श्वादिषूपसंख्यानम्** * ३ । २ । १५ ॥ पार्श्व उदर पृष्ठ उत्तान अवमूर्धन् ॥ **इति पार्श्वादिः ॥ ९ ॥**

३४० **भविष्यति गम्यादयः** ३ । ३ । ३ ॥ गमी आगमी भावी प्रस्थायी प्रतिरोधी प्रतियोधी प्रतिबोधी प्रतियायी प्रतियोगी ॥ **एते गम्यादयः ॥ १० ॥**

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

३४६ *** संपदादिभ्यः क्विप् *** ३ । ३ । ९४ ॥ संपद् विपद् आपद् प्रतिपद् परिषद् ॥ **एते संपदादयः ॥ ११ ॥**

३४६ **षिद्भिदादिभ्योऽङ्** ३ । ३ । १०४ ॥ भिदा विदारणे । छिदा द्वैधीकरणे । विदा । क्षिपा । गुहा गिर्योषध्योः । श्रद्धा मेधा गोधा । आरा शस्त्र्याम् । हारा । कारा बन्धने । क्षिया । तारा ज्योतिषि । धारा प्रपातने । रेखा चूडा पीडा वपा वसा मृजा । कृपेः संप्रसारणं च । कृपा ॥ **इति भिदादिः ॥ १२ ॥**

३४० **भीमादयोऽपादाने** ३ । ४ । ७४ ॥ भीम भीष्म भयानक वहचर ( वह चरु ) प्रस्कन्द प्रपतन ( प्रतपन ) समुद्र स्रुव स्रुक् वृष्टि ( दृष्टि ) रक्षः संकसुक ( शङ्कुसुक ) मुर्ख खलति ॥ **आकृतिगणोऽयम् ॥ इति भीमादिः ॥ १३ ॥**

---

## चतुर्थोऽध्यायः ।

४६ **अजाद्यतष्टाप्** ४ । १ । ४ ॥ अजा एडका कोकिला चटका अश्वा मूषिका बाला होडा पाका वत्सा मन्दा विलाता पूर्वापिहाणा ( पूर्वापहाणा ) अपरापहाणा । संभस्त्राजिनशणपिण्डेभ्यः फलात् । सदच्काण्डप्रान्ताशतैकेभ्यः पुष्पात् । शूद्रा चामहत्पूर्वा जातिः । क्रुञ्चा उष्णिहा देवविशा ज्येष्ठा कनिष्ठा । मध्यमा पुंयोगेऽपि । मूलान्नञः . दंष्ट्रा ॥ **एतेऽजादयः ॥ १ ॥**

२९ **न षट्स्वस्रादिभ्यः** ४ । १ । १० ॥ स्वसृ दुहितृ ननान्दृ यातृ मातृ तिसृ चतसृ ॥ **इति स्वस्रादिः ॥ २ ॥**

९१ **नित्यं सपत्न्यादिषु** ४ । १ । ३५ ॥ समान एक वीर पिण्ड श्व ( शिरी ) भ्रातृ भद्र पुत्र दासाच्छन्दसि ॥ **इति समानादिः ॥ ३ ॥**

९१ **षिद्गौरादिभ्यश्च** ४ । १ । ४१ ॥ गौर मत्स्य मनुष्य शृङ्ग पिङ्गल हय गवय मुकय ऋष्य [ पुट तूणु ] द्रुणु द्रोण हरिण कोकण ( काकण ) पटर उणक [ आमल ] आमलक कुवल बिम्ब बदर फर्कर ( कर्करक ) तर्कार शर्कार पुष्कर शिखण्ड सलद शष्कण्ड सनन्द सुषम सुषव अलिन्द गडुल षाण्डश आथक आनन्द आश्वत्थ सृपाट आखक ( आपच्चिक ) शष्कुल सूर्य ( सूर्म ) शूर्प सूच यूष ( पूष ) यूथ सूप मेथ वल्लक घातक सल्लक मालक मालत साल्वक वेतस वृक्ष ( वृस ) अतस [ उभय ] भृङ्ग मह मठ छेद पेश मेद श्वन् तक्षन् अनडुही अनड्वाही । एषणः करणे । देह देहल काकादन गवादन तेजन रजन लवण औद्गाहमानि आद्गाहमानि गौतम ( गोतम ) [ पारक ] अयस्थूण ( अयःस्थूण ) भौरिकि भौलिकि भौलिङ्गि यान मेध आलम्बि आलजि आलब्धि आलक्षि केवाल आपक आरट नट टोट नोट मूलाट शातन [ पोतन ] पातन पाठन ( पानठ ) आस्तरण अधिकरण अधिकार अग्रहायणी ( आग्रहायणी ) प्रत्यवरो-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

हिणी [ सेचन ] सुमङ्गलात्संज्ञायाम् । अण्डर सुन्दर मण्डल मन्थर मङ्गल पट पिण्ड [ षण्ड ] उर्द गुर्द शम सूद औड ( आर्द्र ) हृद ( ह्रद ) पाण्ड [ भाण्डल ] भाण्ड [ लोहाण्ड ] कदर कन्दर कदल तरुण तलुन कल्माष बृहत् महत् [ सोम ] सौधर्म रोहिणी नक्षत्रे । रेवती नक्षत्रे । विकल निष्कल पुष्कल । कटाच्छ्रोणिवचने । पिप्पल्यादयश्च । पिप्पली हरितकी ( हरीतकी ) कोशातकी शमी वरी शरी पृथिवी क्रोष्टु मातामह पितामह ॥ **इति गौरादिः ॥ ४ ॥**

९३ **बह्वादिभ्यश्च** ४ । १ । ४५ ॥ बहु पद्धति अञ्चति अङ्कति अंहति शकटि ( शकति ) शक्तिः शस्त्रे । शारि वारि राति राधि [ शाधि ] अहि कपि यष्टि मुनि । इतः प्राण्यङ्गात् । कृदिकारादक्तिनः । सर्वतोऽक्तिन्नर्थादित्येके । चण्ड अराल कृपण कमल विकट विशाल विशङ्कट भरुज ध्वज चन्द्रभागान्नद्याम् ( चन्द्रभागा नद्याम् ) कल्याण उदार पुराण अहन् क्रोड नख खुर शिखा बाल शफ गुद ॥ **आकृतिगणोऽयम्** । तेन भग गल राग इत्यादि ॥ **इति बह्वादयः ॥ ५ ॥**

९९ **शार्ङ्गरवाद्यञो ङीन्** ४ । १ । ७३ ॥ शार्ङ्गरव कापटव गौग्गुलव ब्राह्मण वैद गौतम कामण्डलेय ब्राह्मणकृतेय [ आनिचेय ] आनिधेय आशोकेय वात्स्यायन मौञ्जायन कैकस काप्य ( काव्य ) शैव्य एहि पर्येहि आश्मरथ्य औदपान अराल चण्डाल वतण्ड भोगवद्गौरिमतोः संज्ञायां घादिषु [ ६ । ३ । ४३ ] नित्यं ह्रस्वार्थम् । नृनरयोर्वृद्धिश्च ॥ **इति शार्ङ्गरवादिः ॥ ६ ॥**

११८ **कौड्यादिभ्यश्च** ४ । १ । ८० ॥ क्रौडि लाडि व्याडि आपिशलि आपक्षिति चौटयत चैपयत ( वैटयत ) सैकयत बैल्वयत सौधातकि । सूत युवत्याम् । भोज क्षत्रिये । यौतकि कौटि भौरिकि भौलिकि [ शाल्मलि ] शालास्थलि कापिष्ठलि गौकक्ष्य ॥ **इति क्रौड्यादिः ॥ ७ ॥**

१०७ **अश्वपत्यादिभ्यश्च** ४ । १ । ८४ ॥ अश्वपति [ ज्ञानपति ] शतपति धनपति गणपति [ स्थानपति यज्ञपति ] राष्ट्रपति कुलपति गृहपति [ पशुपति ] धान्यपति धन्वपति [ बन्धुपति धर्मपति ] सभापति प्राणपति क्षेत्रपति **इत्यश्वपत्यादिः ॥ ८ ॥**

१०७ **उत्सादिभ्योऽञ्** ४ । १ । ८६ ॥ उत्स उदपान विकर विनद महानद महानस महाप्राण तरुण तलुन । बष्कयासे । पृथिवी [ धेनु ] पङ्क्ति जगती त्रिष्टुप् अनुष्टुप् जनपद भरत उशीनर ग्रीष्म पीलुकुण । उदस्थान देशे । पृषदंश भल्लकीय रथंतर मध्यंदिन बृहत् महत् सत्त्वत् कुरु पाञ्चल इन्द्रावसान उष्णिह् ककुभ् सुवर्ण देव ग्रीष्मादच्छन्दसि ॥ **इत्युत्सादिः ॥ ९ ॥**

१०९ **बाह्वादिभ्यश्च** ४ । १ । ९६ ॥ बाहु उपबाहु उपवाकु निवाकु शिवाकु वटाकु उपनिन्दु ( उपविन्दु ) वृषली वृकला चूडा बलाका मूषिका कुशला भगला ( छगला )

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ध्रुवका [ धुवका ] सुमित्रा दुर्मित्रा पुष्करसद् अनुहरत् देवशर्मन् अग्निशर्मन् [ भद्रशर्मन् सुशर्मन् ] कुनामन् ( सुनामन् ) पञ्चन् सप्तन् अष्टन् । अमितौजसः सलोपश्च । सुधावत् उदञ्चु शिरस् माष शराविन् मरीची क्षेमवृद्धिन् शृङ्खलतोदिन् खरनादिन् नगरमर्दिन् प्राकारमर्दिन् लोमन् अजीगर्त कृष्ण युधिष्ठिर अर्जुन साम्ब गद प्रद्युम्न राम ( उदङ्क ) । उदकः संज्ञायाम् । संभूयोम्भसोः सलोपश्च ॥ **आकृतिगणोऽयम्** ॥ तेन । सात्त्वकिः जाङ्घिः ऐन्द्रशर्मिः आजधेनविः इत्यादि ॥ **इति बाह्वादयः** ॥ १० ॥

११० **गोत्रे कुञ्जादिभ्यश्च्फञ्** ४ । १ । ९८ ॥ कुञ्ज ब्रध्न शङ्ख भसन् गण लोमन् शठ शाक शुण्डा शुभ विपाश् स्कन्द स्कम्भ ॥ **इति कुञ्जादिः** ॥ ११ ॥

११० **नडादिभ्यः फक्** ४ । १ । ९९ ॥ नड चर ( वर ) बक मुञ्ज इतिक इतिश उपक ( एक ) लमक । शलङ्कु कलङ्कं च । सप्तल वाजप्य तिक । अग्निशर्मन्वृषगणे । प्राण नर सायक दास मित्र द्वीप पिङ्गर पिङ्गल किङ्कर किङ्कल ( कातर ) फातल काश्यप ( कुश्यप ) काश्य काल्य ( काव्य ) अज अनुष्य ( अमुष्म ) कृष्णरणौ ब्राह्मणवासिष्ठे । अमित्र लिगु चित्र कुमार । क्रोष्टु क्रोष्टं च । लोह दुर्ग स्तम्भ शिंशपा अग्र तृण शकट सुमनस् सुमत मिमत ऋच् जलंधर अध्वर युगंधर हंसक दण्डिन् हस्तिन् [ पिण्ड ] पञ्चाल चमसिन् सुकृत्य स्थिरक ब्राह्मण चटक बदर अश्वल खरप लङ्क इन्ध अस्त्र कामुक ब्रह्मदत्त उदुम्बर शोण अलोह दण्डप ॥ **इति नडादिः** ॥ १२ ॥

११० **अनृष्यानन्तर्ये बिदादिभ्योऽञ्** ४ । १ । १०४ ॥ बिद उर्व कश्यप कुशिक भरद्वाज उपमन्यु किलात कन्दर्प ( किंदर्भ ) विश्वानर ऋषिषेण (ऋष्टिषेण) ऋतभाग हर्यश्व प्रियक आपस्तम्ब कुचवार शरद्वत् शुनक ( शुनक् ) धेनु गोपवन शिग्रु बिन्दु [ भोगक ] भाजन (शमिक) अश्वावतान श्यामाक श्यामक (श्यावलि) श्यापर्ण हरित किंदास बह्यस्क अर्कजूष (अर्कलूष) बध्योग विष्णुवृद्ध प्रतिबोध रचित (रथीतर) रथन्तर गविष्ठिर निषाद ( शबर अलस ) मठर ( मृडाकु ) सृपाकु मृदु पुनर्भू पुत्र दुहितृ ननान्द । परस्त्री परशुं च ॥ **इति बिदादिः** ॥ १३ ॥

१११ **गर्गादिभ्यो यञ्** ४ । १ । १०५ ॥ गर्ग वत्स । वाजासे संकृति अज व्याघ्रपात् विदभृत् प्राचीनयोग ( अगस्ति ) पुलस्ति चमस रेभ अग्निवेश शङ्ख शट शक एक धूम अवट मनस् धनंजय वृक्ष विश्वावसु जरमाण लोहित शंसित बभ्रु वल्गु मण्डु गण्डु शङ्ख लिगु गुहलु मन्तु मङ्क्षु असिगु जिगीषु मनु तन्तु मनायी सूनु कथक कन्थक ऋक्ष तृक्ष ( वृक्ष ) [ तनु ] तरुक्ष तलुक्ष तण्ड वतण्ड कपिकत ( कपि कत ) कुरुकत अनडुह कण्व शकल गोकक्ष अगस्त्य कण्डिनी यज्ञवल्क पर्णवल्क अभयजात विरोहित वृषगण रहूगण शण्डिल वर्णक ( चणक ) चुलुक मुद्गल मुसल जमदग्नि पराशर जतूकर्ण ( जातूकर्ण ) महित मन्त्रित अश्मरथ शर्कराक्ष पूतिमाष स्थूरा अदरक ( अररक ) एलाक


CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पिङ्गल कृष्ण लोलन्द उलूक तितिक्ष भिषज ( भिषज् ) [ भिष्णज ] भडित भण्डित दल्भ चेकित चिकित्सित देवहू इन्द्रहू एकलु पिप्पलु बृहदग्नि [ सुलोहिन् ] सुलाभिन् उक्थ कुटीगु ॥ **इति गर्गादिः ॥ १४ ॥**

१११ **अश्वादिभ्यः फञ्** ४ । १ । १० ॥ अश्व अश्मन् शङ्ख शूद्रक विद पुट रोहिण खर्जूर ( खजूर ) [ खञ्जार वस्त ] पिजूल भडिल भण्डिल भडित भण्डित [ प्रकृत रामोद ] क्षान्त [ काश तीक्ष्ण गोलाङ्क अर्क स्वर स्फुट चक्र श्रविष्ठ ] पविन्द पवित्र गोमिन् श्याम धूम धूम्र वाग्मित् विश्वानर कुट । शप आत्रेये । जन जड खड ग्रीष्म अर्ह कित विशंप विशाल गिरि चपल चुप दासक वैल्य ( बैल्व ) प्राच्य [ धर्म्य ] आनडुह्य । पुंसि जाते । अर्जुन [ प्रहृत ] सुमनस् दुर्मनस् मन ( मनस् ) [ प्रान्त ] ध्वन । अत्रेय भरद्वाजे भरद्वाज आत्रेय । उत्स आतव कितव [ वद धन्य पाद ] शिव खदिर ॥ **इत्यश्वादिः ॥ १५ ॥**

१११ **शिवादिभ्योऽण्** ४।१।११२॥ शिव प्रोष्ठ प्रोष्ठिक चण्ड जम्भ भूरि दण्ड कुठार ककुभ् (ककुभा) अनभिम्लान कोहित सुख संधि सुनि ककुत्स्थ कहोड कोहड कहूय कहय रोध कपिञ्जल (कपिञ्जल ) खञ्जन वतण्ड तृणकर्ण क्षीरहृद जलहृद परिल । [ पथिक ] पिष्ट हैहय [ पार्षिका ] गोपिका कपिलिका जटिलिका बधिरिका मञ्जीरक [ मजिरक ] वृष्णिक खञ्जास खञ्जाह [ कर्मार ] रेख लेख आलेखन विश्रवण रणव वर्तनाक्ष ग्रीवाक्ष [ पिटप विटक ] पिटाक तृक्षाक नभाक ऊर्णनाभ जरत्कारु [ पृथा उत्क्षेप ] पुरोहितिका सुरोहितिका सुरोहिका आर्यश्वेत ( अर्यश्वेत ) सुपिष्ट मसुरकर्ण मयूरकर्ण [ खर्जुरकर्ण ] कदूरक तक्षन् ऋष्टिषेण गङ्गा विपाश यस्क लह्य द्रुह्य अयस्थूण तृणकर्ण ( तृण कर्ण ) पर्ण भलन्द विरूपाक्ष भूमि इला सपत्नी । द्व्यचो नद्याः । त्रिवेणी त्रिवणं च ॥ **इति शिवादिः ॥ आकृतिगणः ॥ १६ ॥**

११२ **शुभ्रादिभ्यश्च** ४ । १ । १२३ ॥ शुभ्र विष्ट पुर (विष्टपुर) ब्रह्मकृत शतद्वार शलाथल शलाकाभ्रू लेखाभ्रू ( लेखाभ्र ) विकंसा ( विकास ) रोहिणी रुहिणी धर्मिणी दिश् शालूक अजबस्ति शकंधि विमातृ विधवा शुक विश देवतर शकुनि शुक्र उग्र शातल ( शतल) बन्धकी सृकण्डु विस्त्रि अतिथि गोदन्त कुशाम्ब मकष्ट शाताहर पवष्टुरिक सुनामन् । लक्ष्मणश्यामयोर्वासिष्ठे । गोधा कृकलास अणीव प्रवाहण भरत ( भारत ) भरम मृकण्डु कर्पूर इतर अन्यतर आलीढ सुदन्त दुदक्ष सुवक्षस् सुदामन् कद्रुतुप अकशाय कुमारिका कुठारिका किशोरिका अम्बिका जिह्माशिन् परिधि वायुदत्त शकल शलाका खडूर कुबेरिका अशोका गन्धपिङ्गला खडोन्मत्ता अनुदृष्टिन् ( अनुदृष्टि ) जरतिन् बलीवर्दिन् विग्र वीज जीव श्वन् अश्मन् अश्व अजिर ॥ **इति शुभ्रादिः ॥ आकृतिगणः ॥ १७ ॥**

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

११३ **कल्याण्यादीनामिनङ् च** ४ । १ । १२६ ॥ कल्याणी सुभगा दुर्भगा बन्धकी अनुदृष्टि अनुसृति ( अनुसृति ) जरती बलीवर्दी ज्येष्ठा कनिष्ठा मध्यमा परस्त्री ॥ **इति कल्याण्यादिः ॥ १८ ॥**

११४ **गृष्ट्यादिभ्यश्च** ४ । १ । १३६ ॥ गृष्टि हृष्टि बलि हलि विश्रि कुद्रि अजवस्ति मित्रयु ॥ **इति गृष्ट्यादिः ॥ १९ ॥**

११५ **रेवत्यादिभ्यष्ठक्** ४ । १ । १४६ ॥ रेवती अश्वपाली मणिपाली द्वारपाली वृकवञ्चिन् वृकबन्धु वृकग्राह कर्णग्राह दण्डग्राह कुक्कुटाक्ष ( ककुदाक्ष ) चामरग्राह ॥ **इति रेवत्यादिः ॥ २० ॥**

११६ **कुर्वादिभ्यो ण्यः** ४।१।१५१॥ कुरु गर्गर मङ्कुष अजमार रथकार वावदूक। सम्राजः क्षत्रिये । कवि मति ( विमति ) कापिञ्जलादि वाक् वामरथ पितृमत् इन्द्रजाली एजि वातकि दामोष्णीषि गणकारि कैशोरि कुट शालाका ( शलाका ) मुर पुर एरका शुभ्र अभ्र दर्भ केशिनी । वेनाच्छन्दसि । शूर्पणाय श्यावनाय श्यावरथ शावपुत्र सत्यंकार वडभीकार पथिकार मूढ शकन्धु शङ्कु शाक शालिन् शालीन कर्तृ हर्तृ इन पिण्डी तक्षन् वामरथस्य कण्वादिवत्स्वरवर्जम् ॥ **इति कुर्वादिः ॥ २१ ॥**

११६ **तिकादिभ्यः फिञ्** ४ । १ । १५४ ॥ तिक कितव संज्ञाबालशिख ( संज्ञा वाला शिखा ) उरस् शाट्य सैन्धव यमुन्द रूप्य ग्राम्य नील अमित्र गोकक्ष कुरु देवरथ तैतिल औरस कौरव्य भौरिकि भौलिकि चौपयत चैटयत शीकयत क्षैतयत वाजवत चन्द्रमस् शुभ गङ्गा वरेण्य सुपामन् आरब्ध बाह्यक खल्पक वृष लोमक उदन्य यज्ञ **इति तिकादिः ॥ २२ ॥**

११७ **वाकिनादीनां कुक्च** ४ । १ । १५८ ॥ वाकिन गौधेर कार्कश काक लङ्का । चर्मिवर्मिणोर्नलोपश्च ॥ **इति वाकिनादिः ॥ २३ ॥**

११७ **कम्बोजाल्लुक्** ४ । १ । १७५ ॥ कम्बोज चोल केरल शक यवन ॥ **इति कम्बोजादिः ॥ २४ ॥**

११८ **न प्राच्यभर्गादियौधेयादिभ्यः** ४ । १ । १७८ ॥ १ भर्ग करूश केकय कश्मीर साल्व सुस्थाल उरस् कौरव्य ॥ **इति भर्गादिः ॥ २५ ॥**

२ यौधेय शौक्रेय शौभ्रेय ज्यावाणेय धौर्तेय धार्तेय त्रिगर्त भरत उशीनर ॥ **इति यौधेयादिः ॥ २६ ॥**

१२१ **भिक्षादिभ्योऽण्** ४ । २ । ३८ ॥ भिक्षा गर्भिणी क्षेत्र करीष अङ्गार चर्मिन् धर्मिन् सहस्र युवति पदाति पद्धति अथर्वन् दक्षिणा भरत विषय श्रोत्र ॥ **इति भिक्षादिः ॥ २७ ॥**

१२२ **खण्डिकादिभ्यश्च** ४।२।४५॥ खण्डिका वडवा। क्षुद्रकमालवात् सेनासं-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

